

मल्लिनाथविरचित-सञ्जीवनीसमेत् 2352

# रघुवंशमहाकाव्यम्

प्रसङ्गान्वय चन्द्रिका-संस्कृत-हिन्दी व्याख्योपेतम्

( सर्गः २ )

व्याख्याकारः

पं० जितेन्द्राचार्य

मल्लिनाथविरचित-सञ्जीविनीसमेतम्

# रघुवंशमहाकाव्यम्

प्रसङ्गान्वय चन्द्रिका-संस्कृत-हिन्दी-व्याख्योपेतम्

## तृतीय-सर्गः



व्याख्याकार :

पं० जितेन्द्राचार्य

भारतीय विद्या प्रकाशन

वाराणसी दिल्ली

( भारत )

प्रकाशक :

भारतीय विद्या प्रकाशन

१–पोस्ट बॉक्स ११०८, कचौड़ी गली, वाराणसी–२२१००१

२–१, यू. बी. जवाहर नगर, बंग्लों रोड, दिल्ली–११०००७



अन्य प्राप्ति स्थान :–

भारतीय विद्या संस्थान

सी. २७/५९, जगतगंज, वाराणसी–२२१००२

भारतीय बुक कारपोरेशन

१, यू. बी-, जवाहर नगर, बंग्लो रोड, दिल्ली–११०००७



चतुर्थ संस्करण : १९८५

मूल्य : [illegible]००



मुद्रक :

एम० के० प्रिंटर्स,

बजुरी, वाराणसी

# विषय सूची



## पद्यानुक्रमणी

# आलोचना

कालिदास्य जीवनपरिचयः—संस्कृतसाहित्याध्ययनाध्यापनपरिशीलन तत्पराणाञ्छात्राणामध्यापकानां विद्वत्सल्लजानाञ्च पुरतः कविकुलशिरोमणि-कालिदासविषये किञ्चित्कथनं लेखनं वा भानवे दीपदर्शनमिव सारहीनम्प्रतीयते। यतो हि वाल्मीकिव्यासयोरनन्तरं यथा प्रतिष्ठा कालिदासमनुगता न तथा कोऽप्यन्यःकविर्लेभे। न केवलमेतत्, अपितु भारतीयानाम्पाश्चात्यानाञ्च समा-लोचकानाम्मापकतुलासु तन्निकषेषु च कविकालिदासः संस्कृतभाषायाः श्रेष्ठः कविस्सिद्धो भवति, सः देशकालयोः सीम्नि बद्धुन्न शक्यते। युवावस्थायां कालिदासोऽयन्तंमूर्खं आसीदित्येषा श्रूयते किंवदन्ती। यस्यां वृक्षशाखायामुप-विष्ट आसीत्सः तामेव शाखां शङ्कुलया छिन्दन्नासीत्। सर्वे राजाश्रिताः विद्वांसः एतस्य मूर्खतां दृष्ट्वा विदुषीं विद्योत्तमां राजकुमारीमूचुः—"हे कुमारिके! त्वत्तो विशिष्टः कोऽपि विद्वान् समागतो वर्तते। सः त्वया शास्त्रार्थंकरणाय समुत्सुकोऽस्ति।" एतदनन्तरं शास्त्रार्थः प्रवृत्त उभयोः। शास्त्रार्थे च पूर्वं विद्योत्तमया पराजितानां राजपण्डितानां षड्यन्त्रेण सा राज-कुमारी पराजिता। ततश्च तैः राजपण्डितैः तस्याः राजकुमार्याः कालिदासेन सह परिणयोऽपि सम्पादितः।

अथ कदाचिद्राजप्रासादपृष्ठे विद्योत्तमाकालिदासौ समुपविष्टावास्ताम्। तस्मिन्नेव काले घण्टापथे गच्छन्तं क्रमेलकसमजं दृष्ट्वा विद्योत्तमा पप्रच्छ-कालिदासम्—"के इमे गच्छन्ति?" एवं पृष्टः सन् कालिदास उवाच—"उट्ट्र" इति।"

एवं "उष्ट्र" शब्दस्य स्थाने "उट्ट्र" इत्यपशब्दं श्रुत्वा क्रोधवशंगता विद्योत्तमा कालिदासं राजप्रासादपृष्ठान्नीचैर्निचिक्षेप। संयोगवशात् तत्क्षणं सः महाकालीचरणयोः शरणम्प्रपन्नः। तदानीम्प्रसन्ना महाकाली प्रोवाच "वत्स! वरं वृणीष्व।" परन्तु कालिदासः तदभिप्रायानुगमाऽभावात् विद्योत्तमा-निक्षेपणहेतोश्च "कुतस्त्वमायात" इत्यस्योत्तरमनुसंदधानउपरिष्टादङ्गुलिनि-देशं कुर्वाणः विद्याशब्दमुच्चचार।तस्यायमभिप्राय आसीत् "विद्योत्तमा" मां

निचिक्षेप इति ।" विद्येति वरयाचनोत्तरं श्रुत्वा महाकाली परमप्रसन्ना सती "तथास्तु" इत्येवं वरं ददौ ।

एतद्वरानन्तरं विद्याप्रसादसम्पन्नः कालिदासः स्वधर्मपत्न्याः विद्योत्तमाया द्वारमुपेत्यार्गलां खट्खटायाञ्चक्रे । अर्गलाध्वनिं श्रुत्वा विद्योत्तमा पप्रच्छ "कोऽस्ति ?" उत्तरमागतम् 'अहं कालिदासोऽस्मि ।" तदा पुनः विद्योत्तमाऽन्वयुङ्क्त—"अस्ति कश्चिद्वविशेषः ?" कालिदासः एतस्मिन्वाक्ये प्रयुक्तेषु शब्देषु प्रतिशब्दमधिकृत्यैकैकं काव्यं विरचितवान् । "अस्ति" पदमधिकृत्य 'अस्त्युत्तरस्यां दिशि देवतात्मा" इति प्रतीकेन "कुमारसम्भवम्" नाम महाकाव्यञ्चकार । "कश्चित्" पदमधिकृत्य "कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः" इति प्रतीकेन "मेघदूतम्" निर्ममे । "वाक्" पदमाधिकृत्य "वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये" इति प्रतीकेन "रघुवंशम्" महाकाव्यं व्यधात् । "विशेष" पदमाधिकृत्य "विक्रमोर्वशीयम्", "मालविकाग्निमित्रम्", "अभिज्ञानशाकुन्तलम्" इत्यादीनि नाटकानि लघुकाव्यानि च जग्रन्थ । एवम्प्रदर्शितकाव्यविद्याकुशलः कालिदासः पण्डितम्मन्यायाः विद्योत्तमायाः मानमर्दनं व्यधात् ।

एवं हि श्रूयते कदाचित् भारतीयकविसमाजे श्रेष्ठकवीनां गणना समारब्धा । तदानीं कालिदासाय कनिष्ठिकाङ्गुलिः कविभिर्निर्धारिता । तदनन्तरं कालिदासात् श्रेष्ठकवीनां कृते उत्तरोत्तरमङ्गुलिस्थानं व्यवस्थापितम् । किन्तु कालिदासादुत्कृष्टकवेरभावात् ततःप्रभृति कनिष्ठिकाङ्गुलिपार्श्वस्थिताङ्गुलिनाम "अनामिका" इति प्रसिद्धिमगात् । अस्मिन्विषये प्रसिद्धोऽयं श्लोको गीयतेऽभियुक्तैः—

पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः ।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव ॥

कालिदासस्य कालनिर्णयः—कविकुलशिरोमणेः महाकवेः कालिदासस्य जन्मनिवासादिवर्णनविषये तद्रचितमहाकाव्यनाटकादिषु न क्वापि किञ्चित् निर्दिष्टम् । अतोऽस्य विषये किमपि वास्तविकमुद्घोषणमसम्भवमेव । तथापि केचन तिहासविदो वदन्ति यत्कालिदासः गुप्तवंशीयस्य चक्रवर्तिनो महाराजस्य

कुमारगुप्तस्य समये बभूव। अतएव रघुवंशे (सर्ग ४, श्लोक २६) "स गुप्त-मूलप्रत्यन्त:" इति श्लोके "गुप्त" शब्द निर्दिदेश तथा "आकुमारककथोद्धताम्" (सर्ग ४, श्लोक २०) "कुमार" शब्दप्रयोगात् कालिदास: कुमारगुप्तकाले बभूव। परन्त्वेवं कथन श्लोकेभ्य: हठादाकृष्टस्यार्थस्य क्लिष्टा कल्पना किमुचितेति सर्वतो विभावयन्तु सुधिय:।

केचन पाश्चात्या: विद्वांस: कालिदासस्य सत्तां ईशाया: षष्ठशताब्दीम्, पञ्चम शताब्दीम्, प्रथमशताब्दीं वा मन्यन्ते। ईशाया: षष्ठशताब्दीमतप्रवर्तक डा० फर्गुसन नामा विद्वान् बभूव। तेनोक्तं यत् ५४४ ईशवीये महाराजविक्रमादित्य: हूणान्पराजित्य तद्विजयस्मृतौ स्वसंवत्सर प्राचीचलत्। अयमेव कालिदासाऽभिमतोविक्रम आसीत्। डा० मोक्षमूलरोऽप्येवमेव मतं प्रतिजज्ञे। डा० कीथ ह्वार्नेमतमस्ति यत् ईशाया: षष्ठशताब्द्यां कालिदास: यशोवर्मण नृपस्याश्रित आसीत्। तस्यैव यशोवर्मणोदिग्विजयमधिकृत्य रघोर्दिग्विजयशंसिनो रघुवंश-महाकाव्यस्य रचना तेन कृता। परन्तूक्तमतं भ्रान्तिपूर्णमस्ति, हेतुस्तत्र ५४४ ईशवीये न कोपि विक्रमादित्यो बभूव। यदि कथञ्चित् कश्चित् स्यादपि तथापि स: हूणादिक एव भवितुमर्हति नाऽऽर्य शकारि:। विश्वेतिहासे सञ्चालितस्य वर्तमानस्य संवत्सरस्य षडशीतिवर्षपूर्वं प्राचीनताद्योतनाय न किमपि दृष्टान्तं दृग्गोचरी: भवति। ४७३ ईशवीयस्य मन्दसौरशिलालेखे मेघदूतस्य, ऋतुसंहारस्य च पद्यानां स्पष्टंस उल्लेखो दृश्यते। अत: ईशाया शताब्द्यां कालिदासस्य स्थिति निराधाराएव प्रतिभाति। ईशाया: पञ्चमशताब्दीप्रवर्तका: विद्वांस: पाश्चात्यास्तथा कतिपये भारतीया अपि विद्वांसो दृश्यन्ते। तेषामयं विचारोऽस्ति यत् गुप्तकालो भारतीयसाहित्यस्य स्वर्णयुग इति मन्यते। द्वितीय सम्राट् चन्द्रगुप्त: विक्रमादित्य इत्युपाधि सम्प्रधार्य शकान् पराजित्ये। कालिदासस्य रघुवंशम्, विक्रमोर्वशीयम्, कुमारसम्भवम् प्रभृति महाकाव्येषु कुमारशब्दस्य गुप् धातोश्च प्रयोगा: कालिदासस्य गुप्तकालीनत्वं स्पष्टं संसाधयन्ति।

●

कालिदासस्य जन्मस्थाननिर्णय:—कालिदासस्य जन्मविषये प्राच्यै: प्रतीच्यैश्चैतिह्यविद्भिर्न किञ्चित् प्रामाणिकरूपेण निर्दिष्टन्तथाप्यस्माकम्मतेन तु स: उज्जयिन्या तत्पार्श्ववर्तिभागस्यैव वा वास्तव्य आसीदित्यनुमीयते।

यतो हि तेन पूर्वमेघदूते सप्तविंशे श्लोके तथा एकत्रिंशे श्लोके स्पष्टमेव निर्दिष्टम्—

वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशाम् ।
सौधोत्सङ्गप्रणयविमुखो मास्मभूरुज्जयिन्याः ॥
(पू० मे० २७)

यथा—

यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः ।
सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥
(पू० मे० ३१)

एतश्श्लोकोक्तविवरणात् सिप्रायाः, उज्जयिन्याः वर्णनहेतोश्च कालिदासः उज्जयिन्याः तत्पार्श्ववर्तिन्याश्च वसुन्धरायाः निवासी समनुमीयते । केचन विद्वांसः वङ्गानां, कश्मीराणां, विदर्भाणां वा निवासिनं तं मन्यन्ते यच्च नितान्तम्भ्रममूलकमेव प्रतिभाति ।



कालिदासस्य कृतयः—"अस्ति कश्चिद्वाग्विशेषः" इतिनिर्देशानुसारम् "कुमारसम्भवम्", "मेघदूतम्", "रघुवंशम्" इत्येतानि त्रीणि काव्यानि विश्व-विश्रुतानि निर्दिश्यन्ते । येषामनुवादाः प्राच्यप्रतीच्यविद्वद्भिस्स्वस्वभाषासु सम्पादिताः । "अस्तिकश्चिद्वाग्विशेषः" इति वाक्योक्त "विशेष" पदेन प्रतीक-रूपा कृतयः "मालविकाग्निमित्रम्", "विक्रमोर्वशीयम्", "ऋतुसंहारः" "कुन्तलेश्वर दौत्यम्", "घटखर्परकाव्यम्", "राक्षसकाव्यम्", "दुर्घटकाव्यम्", "नलोदयः", "वृन्दावनकाव्यम्", "विद्वद्विनोदकाव्यम्", "पुष्पवाणविलासः", "नवरत्नमाला", "ज्योतिर्विदाभरणम्", "अम्बास्तवः", "कालिस्तोत्रम्", "गङ्गाष्टकम्", "कल्याणस्तवः", "शृङ्गारसारः", "शृङ्गारतिलकम्", "सेतु-बन्धऽ" इत्यादिकाव्यनाटकमुक्तकरूपेणात्यन्तप्रसिद्धानि सन्त्येव तथापि तन्निर्मित अभिज्ञानशाकुन्तलेन श्रुतबोधेन च यत्पदम्प्राप्तम् तन्न किमप्यन्यदुपलेभे । अभिज्ञानशाकुन्तलस्यानुवादः स्वस्वशैलीमनुस्मृत्य स्वस्वभाषासु बहुभिः विद्वद्भिर्विहितः । एतद्विषये स्पष्टमुक्तमभियुक्तैः—

काव्येषु नाटकं रम्यं तत्र रम्य शकुन्तलम् ।
तत्रापि चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम् ॥

एवमेव 'श्रुतबोधः' इतिनामाभिधं छन्दःशास्त्रं यद्यपि कालिदासेन लघुतमरूपेण लिखितमस्ति तथापि तस्येदं वैशिष्ट्यमस्ति यच्छन्दसां निरूपणं तत्तच्छन्दस्येव कृतमस्ति, अन्येषु छन्दोविधायक ग्रन्थेषु नैवं विधं छन्दसां वर्णनमस्ति।

●

कालिदासस्य वैशिष्ट्यम्—महाकविकालिदासः स्वकाले शृङ्गाररसस्य उपमाऽलङ्कारस्य च उद्भटः विद्वान् आसीत्। अतएव कविशिरोमणिर्बाणभट्टः स्वोपज्ञें "पदव्यञ्जना" नामाभिधे ग्रन्थे कालिदासस्य विषयेविशदं निरूपयाञ्चक्रे—

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते॥

अर्थात् कालिदासस्य रससिक्तासु सुमधुरसूक्तिषु सहकारमञ्जरीष्विव कस्य प्रीतिर्न जायते? अपितु सर्वस्यैव जनस्य तत्राकर्षणं जायते।

सामान्यतया कालिदासः सर्वास्वलङ्काररचनासु प्रसिद्ध एवास्ति, परन्तु उपमाऽलङ्कारविधाने न कोऽपि कविः क्षणमप्यवतिष्ठते। तथाहि—

"मार्गाचलव्यतिकराकुलितेव सिन्धुः,
शैलाधिराजतनया न ययौ न तस्थौ"।
"सञ्चारिणी दीपशिखेव रात्रौ,
यं यं व्यतीयाय पतिंवरा सा"॥
"वागर्थाविवसम्पृक्तौ वागर्थप्रतिपत्तये,
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ"॥

इत्यादिश्लोकेषु परश्शता उपमाऽलङ्काराः लभ्यन्ते, परन्तु रामरावणयोर्महति भयङ्करे युद्धे उपमाऽलङ्कारनिरूपणसमये कालिदासः किमप्युपमानमलभमानः स्पष्टं व्याजहार—

रामरावणयोर्युद्धं रामरावणयोरिव।

एवमेव भगवतो मर्यादापुरुषोत्तमस्य रामस्य विषये कल्पतरुः, सुमेरुः, चिन्तामणिः, सूर्यः, चन्द्रः, कामदेवः, राजाबलिः, कामधेनुः प्रभृतिषु विशिष्टेषु उपमालङ्कारस्थानभूतेष्वपि तेषामुपमालङ्कारस्थानभूतानां खंडनं कुर्वाणः कालिदासः सपिण्डिमं कवीनां पुरस्तात् प्रश्नमुपस्थाप्य महतीं चमत्कृतिं प्रदर्शितवान्। तथापि—

काष्ठंकल्पतरुः सुमेरुरचलश्चिन्तामणिः प्रस्तरः,
सूर्यस्तीव्रकरः शशी क्षयकरः क्षारो हि वारांनिधिः ।
कामो नष्टतनुर्बलिर्दितिसुतो नित्यं पशुः कामगौः,
नैतास्तान् तुलयामि भो रघुपते ! केनोपमा दीयताम् ॥

महाकवि कालिदासः परमः शैव आसीत् । अतएव सः प्रतिकाव्यम् शिवस्य वन्दनामकरोत् । प्रसिद्धे स्वमहाकाव्ये रघुवंशे सः "जगतः पितरौ वन्दे पार्वती-परमेश्वरौ ।" अस्मिन् माङ्गलिके श्लोके पार्वतीपरमेश्वरौ पदेन शिवपार्वत्यो-र्वन्दना तेन कृता, तथापि सः परमवैष्णवः "पार्वतीपरमेश्वरौ" पदेन शिव-पार्वत्योः रमाविष्णोश्चापि बोधो भवति । यथा—पार्वतीं पातीति पार्वतीपः । पार्वतीपश्च रमेश्वरश्च इति "पार्वतीपरमेश्वरौ" इत्येवं व्युत्पत्त्या शिवस्य विष्णोश्च वन्दना कालिदासेन कृतेति स्पष्टं प्रतिभाति ।

# रघुवंश-महाकाव्ये

## तृतीयसर्ग-कथासारः

अयोध्यानरेशस्य दिलीपस्य महिषी सुदक्षिणा गर्भं धारयामास। राजा दिलीपेन पुंसवनादि संस्काराः सम्पादिताः। पुत्र जन्म जातं जातकर्मादयः जात, सुतस्य नामकरणं रघुरिति कृतम्। शुक्लपक्षेशशाङ्क इवाभिवृद्धिमाप्तो ऽनुदिनं रघुः। कालक्रमेण तस्य संस्कारादयः जाताः तथा च सः सर्वासु विद्यासु पारङ्गतवान्। रघोः प्रौढ़ावस्थायां तस्योद्वाहः सम्पादितः दिलीपेन।

राजा दिलीपः नवतिनवाधिकं यागं सम्पाद्य शतक्रतुपदलाभाय अश्वमेघ-क्रतुपूर्त्तये यज्ञाश्वरक्षार्थं रघुं नियोजितवान्। यथेष्टप्रयाणरतमश्वमिन्द्रोऽपाहरत्। यज्ञाश्वमनवलोक्य ससैनिकः रघुः विषण्णः सञ्जातः, किन्तु तस्मिन्नेव काले तत्र नन्दिनी समायाता। तदङ्गनिः स्यन्दजलेनाभिषिक्तलोचनः रघुः यज्ञह्यापहारकामिन्द्रं ददर्श। प्रथमन्तु रघुरिन्द्रं प्रदायितुमियेष वार्त्तया, किन्तु पश्चात् द्वयोर्मध्ये समरः समारब्धः। उभयतः क्षतविक्षत्तिः जाता। अन्ततोगत्वा इन्द्रेण वज्रप्रक्षेपः कृत। रघुः संज्ञा शून्यः जातः, किन्तु क्षणेनैव सः समुत्थितः। ततो इन्द्रः प्रमुदितः जातः तथा च प्रोक्तवान्—अहमश्वं न प्रत्पंयामि किन्तु ते पित्रे यज्ञफलं नावरोधयामि।

रघुरप्यवोचत् हे इन्द्र! ते कथनं साधु, किन्तु समाचारमिमं राजधान्यां मम गमनात् प्राक् मे पिता जानातुस्विति विधेहि। तदैवेन्द्रः स्वसारथिं मातलिं दिलीपं प्रतिसम्प्रेष्य समाचारमगवतवान्।

यज्ञसमाप्त्यनतरं राजा दिलीपः राज्यभार पुत्रे निक्षिप्य सपत्नीकः तपोवनं गतः।

# संक्षिप्त-कथासार

अयोध्यानरेश दिलीप की महिषी सुदक्षिणाने गर्भ धारण किया। राजा ने पुंसवन आदि संस्कार कराये। पुत्र जन्म हुआ, जातकर्म आदि संस्कार हुए, उसका नाम रघु रखा। शुक्लपक्ष के चन्द्रमा के समान वह बालक प्रतिदिन बढ़ने लगा। कालक्रम से उसके उपनयन आदि संस्कार हुए और वह सभी विद्याओं में पारंगत हुआ। जब वह पूर्ण यौवन को पहुंचा तब राजा ने उसका विवाहकराया।

राजा दिलीप निन्यानवें अश्वमेध सम्पन्न कर चुके थे। सौवां पूरा करने को उन्होंने अश्वमेध यज्ञ रचा और उसकी बागडोर रघु को सौंपी। यज्ञ का अश्व यथेष्ट दिशा को जा रहा था कि इन्द्र ने उसका अपहरण कर लिया। अश्व को न देखकर रघु और उसके सैनिक विषण्ण हुए। किन्तु उसी समय नन्दिनी गाय वहाँ आपहुंची। उसके गोमूत्र से आँखें पोंछ कर रघु ने देखा कि इन्द्र ने अश्व का अपहरण किया है। पहले तो रघु ने इंन्द्र को समझाया किन्तु जब इन्द्र नहीं माने तो घनघोर युद्ध हुआ। दोनों क्षत-विक्षत हुए। अन्त में इन्द्र ने वज्र से प्रहार किया। रघु मुर्च्छित हो गये किन्तु क्षण मात्र में ही वे उठ खड़े हुए। इस पर इंन्द्र प्रसन्न हुए और कहा—"मैं अश्व को तो नहीं लौटाऊँगा पर तुम्हारे पिता को यज्ञफल से नहीं रोकूँगा। रघु ने कहा — देवेश यह सब ठीक है किन्तु यह वृत्त मेरे पिता को मेरे पहुंचने से पहले ही विदित हो जाय—ऐसा कर दीजिये। तब इंन्द्र ने अपने सारथि मातलि को राजा दिलीप के पास भेजा और उसे इस समाचार से विदित कराया।

यज्ञ समाप्त होने के पश्चात् राजा दिलीप राज्य भार रघु को सौंप कर पत्नी सहित तपोवन को चल दिये।

# रघुवंशमहाकाव्यम्

❋ — ❋

## तृतीयः सर्गः

अथेप्सितं भर्त्तुरुपस्थितोदय सखीजनोद्वीक्षणकौमुदीमुखम् ।
निदानमिक्ष्वाकुकुलस्य सन्ततेः सुदक्षिणा दौहृदलक्षण दधौ ॥१॥

सन्दर्भः—अयं श्लोकः महाकवि कालिदास प्रणीते रघुवशमहाकाव्ये तृतीये सर्गे विद्यते ।

प्रसङ्गः--अत्र सुदक्षिणायाः गर्भलक्षणं वर्णितमस्ति ।

उपाधिगम्योऽप्यनुपाधिगम्यः समावलोक्योऽप्यसमावलोक्यः ।
भवोऽपि योऽभूदभवः शिवोऽयं जगत्यपायादपि नः स पायात् ॥

अन्वयः—अथ सुदक्षिणा उपस्थितोदयं भर्तुः ईप्सितं सखीजनोद्वीक्षण-कौमुदी मुखम् इक्ष्वाकुकुलस्य सन्ततेः निदानं दौहृदलक्षणं दधौ ।

वाच्य०--अथ सुदक्षिणया दौहृदलक्षणं दधे । (कर्मवा०)

चन्द्रिका—अथ=गर्भधारणानन्तरं, सुदक्षिणा=राज्ञी, उपस्थितो-दयम्=सन्निहितावसरम्, भर्तुः=दिलीपस्य, ईप्सितं=अभीष्टम्, सखीजनानाम्=वयस्यानाम्, उद्वीक्षणानां=लोचनानाम्, कौमुदीमुखं=चन्द्रिकोपक्रमम्, सुदक्षि-णाया गर्भचिन्हं सखीनां कौमुदीवद् आनन्ददायीति भावः । इक्ष्वाकुकुलस्य=इक्ष्वाकुनामकराजवंशस्य, सन्ततेः= सन्तानस्य, ( वशनैरन्तर्यस्येति भावः ) निदानम्=आदिकारणम्, दौहृदस्य= गर्भस्य, स्वस्य चेति हृदयद्वयस्य लक्षणं=चिन्हम्, (शरीरकृशत्वादिक वक्ष्यमाणमित्यर्थः) । दधौ=बभार । (गर्भचिन्हस्य कौमुदीमुखत्वेन रूपणाद् रूपकालङ्कारः) ।

सञ्जीविनी—अथेति । अथ गर्भधारणान्तरं सुदक्षिणा । उपस्थितोदयं प्राप्तकालं भर्तुर्दिलीपस्येप्सितं मनोरथम् । भावे क्तः । भर्तुः सखीजनस्योद्वीक्ष-

णानां दृष्टीनां कौमुदीमुखं चन्द्रिकाप्रादुर्भावम्। यद्वा कौमुदी नाम दीपोत्सवतिथिः। तदुक्तं भविष्योत्तरे–'कौ मोदन्ते जना यस्यां तेनासौ कौमुदी मता' इति। तस्या मुखं प्रारम्भम्। 'सखीजनोद्वीक्षणकौमुदीमहम्' इति पाठं केचित्पठन्ति। इक्ष्वाकुकुलस्य सन्ततेरविच्छेदस्य निदानं मूलकारणम्। 'निदानं त्वादिकारणम्' इत्यमरः। एवं विधं दोहृदलक्षणं गर्भचिन्हं वक्ष्यमाणं दधौ। स्वहृदयेन गर्भहृदयेन च द्विहृदया गर्भिणी। यथाऽऽह वाग्भटः—'मातृजं ह्यस्य हृदयं मातुश्च हृदयेन तत्। सम्बद्धं तेन गर्भिण्या नेष्टं श्रद्धाविमाननम्।" इति। तत्सम्बन्धित्वाद् गर्भो दोहृदमित्युच्यते। सा च तद्योगाद्दोहृदिनीति। तदुक्तं सग्रहे–'द्विहृदयां नारीं दोहृदिनीमाचक्षते॥' इति। अत्र दोहृदलक्षणस्येप्सितत्वेन कौमुदीमुखत्वेन च निरूपणाद् रूपकालङ्कारः। अस्मिन् सर्गे वंशस्थं वृत्तम्—'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात्।

कपियूथानि यद्रूपं लोचनासेचनं महत्।
लोकं लोकं कृतार्थानि, श्रीरामं तं नमाम्यहम्॥

**समासः**—उपस्थितः उदयो यस्य तत् उपस्थितोदयम् ( बहु० ) तत् पुनस्तदेव। कौ (पृथिव्याम्) मोदन्ते (अनयेति) कौमुदी (चन्द्रिका) यद्वा कौमुदी दीपावली, कौ मोदन्ते अस्यामिति व्युत्पत्तेः। सख्य इति जनाः सखीजनाः (सम्भावनापूर्वपदकर्म०)। सखीजनानां कौमुदी सखीजनकौमुदी, सखीजनकौमुद्याः मुखं सखीजनकौमुदीमुखम् ( ष० त० ), तत् पुनस्तद्वत्। इक्ष्वाकूणां कुलम् इक्ष्वाकुकुलम्, तस्य इक्ष्वाकुकुलस्य। दोहृदस्य (गर्भस्य) लक्षणं दोहृदलक्षणम्, तत् पुनस्तद्वत्।

**कोशः**—'मङ्गलानन्तरारम्भ' धव प्रियः पतिर्भर्ता' 'आलिः सखी वयस्याऽथ' 'चन्द्रिका कौमुदी ज्योत्स्ना' 'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ। वंशोऽन्ववायः सन्तानः' निदानं त्वादिकारणम्' 'चिन्हं लक्ष्म च लक्षणम्' इति चामरः।

**भावार्थः**—गर्भधारणोत्तरं सुदक्षिणा पत्युः प्रियं सखीनां नयनानन्दकरं इक्ष्वाकुवंशपरम्पराया अविच्छेदाय हेतुभूतं गर्भचिन्हं शरीरक्षीणता-मृद्भक्षणादिकं धारयामास।

हिन्दीश्लोकार्थः-गर्भधारण के बाद सुदक्षिणा ने समयोचित, पति को प्रिय तथा सखियों के नयनों को चांदनी के आरम्भ के समान (आनन्दप्रद) और इक्ष्वाकुवंश के लगातार चलने के लिए मुख्य कारणभूत गर्भ के चिन्हों (देह दुबला होना आदि ) धारण किया ॥१॥

शरीरसादादसमग्रभूषणा मुखेन साऽलक्ष्यत लोध्रपाण्डुना ।
तनुप्रकाशेन विचेयतारका प्रभातकल्पा शशिनेव शर्वरी ॥२॥

सन्दर्भः—द्रष्टव्यः श्लोक १ ।

प्रसङ्गः—अत्र सगर्भायाः सुदक्षिणायाः शरीरकार्श्यस्य वर्णनमस्ति ।

वाच्य०—असमग्रभूषणां ता विचेयतारकां प्रभातकल्पां शर्वरीमिवालक्षयन्। (कर्तृवाच्यम्)

चन्द्रिका—शरीरस्य = देहस्य, सादाद् = क्षीणत्वाद्, असमग्रभूषणा = समस्ताभरणरहिता, लोध्रवत् = शाबरपुष्पवत्, पाण्डुना = पाण्डुरवर्णेन, (पीत्तिमसंमिश्रश्वेतेनेत्यर्थः). मुखेन = वदनेन, 'उपलक्षिता' युक्ता, सा सुदक्षिणा, उपमेयभूता । विचेयाः = यत्र तत्र गवेषणीयाः, तारकाः नक्षत्राणि, यस्यां सा, तनुप्रकाशेनेन स्वल्पप्रभेण, शशिना = चन्द्रेण, उपलक्षिता = सहिता, प्रभातकल्पा प्रातः कालात् किञ्चिदूना, शर्वरीव=क्षपेव, अलक्ष्यत = अदृश्यत । अत्रोपमालंकारः । सुदक्षिणायाः प्रभातप्रायरात्रेश्च उपमानोपमेयभावो वाच्यः । आभरणानां नक्षत्राणां शशिनो मुखस्य चोपमानोपमेयभावार्थः ।

सञ्जीविनी—शरीरेति । शरीरस्य सादात्कार्श्यादसमग्रभूषणा परिमिताभरणा लोध्रपुष्पेणेव पाण्डुना मुखेनोपलक्षिता सा सुदक्षिणा । विचेया मृग्यास्तारका यस्यां सा तथोक्ता । विरलनक्षत्रेत्यर्थः । तनुप्रकाशेनाल्पकान्तिना शशिनोपलक्षितेषदसमाप्तप्रभाता प्रभातकल्पा । प्रभातादीषदूनेत्यर्थः । 'तसिलादिष्वाकृत्वसुचः' इति प्रभातशब्दस्य पुन्वद्भावः । शर्वरी रात्रिरिव । अलक्ष्यत । शरीरसादादिगर्भलक्षणमाह वाग्भटः—'क्षामता गरिमा कुक्षेर्मूर्च्छा छर्दिररोचकम् । जुम्भा प्रसेकः सदनं रोमराज्याः प्रकाशनम् ॥' इति ।

अन्वयः—शरीरसाद् असमग्रभूषणा लोध्रपाण्डुना मुखेन 'उपलक्षिता' सा विचेयतारका तनुप्रकाशेन शशिना उपलक्षिता प्रभातकल्पा शर्वरी इव अलक्ष्यत ।

समासः—शरीरस्य सादः शरीरसादः (ष० त०), तस्मात् शरीरसादात् । न समग्राणि असमग्राणि नञ्तत्पु) असमग्राणि भूषणानि यस्याः सा असमग्र-भूषणा (बहु०) । लोध्रमिव पाण्डु लोध्रपाण्डु तेन लोध्रपाण्डुना (उपमानपूर्व-पदकर्म०) (पाण्डु पाण्डुनी पाण्डूनि) । तनुः प्रकाशो यस्य सः तनुप्रकाशः, तेन तनुप्रकाशेन (बहु०) । विचेतुं योग्याः विचेयाः तारकाः यस्याः सः विचेयता-रका । प्रभातात् ईषद् ऊना प्रभातकल्पा ।

कोशः—'गालवः शावरो लोध्रस्तिरीटस्तिल्वमाजनौ' 'स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु ।' 'अलंकारस्त्वाभरणं परिष्कारो विभूषणम् ।' हरिणः पाण्डुरः पाण्डुः' 'नक्षत्रमृक्षं भं तारा तारकाप्युडु' वाऽस्त्रियाम् । अथ शर्वरी । निशा निशीथिनी रात्रिस्त्रियामाः क्षणदा क्षपा ।' 'प्रकाशो द्योत आतपः' इति यथायथममरः ।

भावार्थः—देहकार्श्यात् स्वल्पान्येव भूषणानि धारयन्ति पाण्डुवर्णमुखेन युक्ता सुदक्षिणा, विरलनक्षत्रा अल्पकान्तिना चन्द्रेण युक्ता आसन्नप्रभाता रात्रिवदासीदिति भावः ।

हिन्दीश्लोकार्थः—देह कृश हो जाने के कारण थोड़े से आभरणों को पहनी हुई. लोध्रफूल की भाँति पाण्डुवर्णके मुख से युक्त रानी सुदक्षिणा, थोड़े से नक्षत्र इधर उधर टिमटिमा रहे हैं जिसमें, और स्वल्प प्रकाश वाले चन्द्र से युक्त, आसन्न प्रभात वाली रात्रि के समान दीखती थी ।। २ ।।

तदाननं मृत्सुरभि क्षितीश्वरो रहस्युपाघ्राय न तृप्तिमाययौ ।
करीव सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलम् ।। ३ ।।

सन्दर्भः—द्रष्टव्यः श्लोक १ ।

प्रसङ्गः—अत्र सगर्भायाः सुदक्षिणायाः मृद्गन्धसम्पन्नमुखाघ्राणेऽतृप्ता-वस्थायाः वर्णनमस्ति ।

अन्वय०—क्षितीश्वरः रहसि मृत्सुरभि तदाननम् उपाघ्राय शुचिव्यपाये पयोमुचां पृषतैः सिक्तं वनराजिपल्वलम् उपाघ्राय करीव तृप्ति न आययौ ।

वाच्यः—क्षितीश्वरेण करिणेव तृप्तिः नायये (कर्मवाच्यम्)

व्याख्या—क्षितीश्वरः = भूपतिः दिलीपः, रहसि = एकान्ते, मृदा =

मृत्सया, सुरभि = घ्राणतर्पणम्, तस्याः = सुदक्षिणायाः, आननम् = मुखं (वदनम्), उपाघ्राय घ्राणेन साक्षात्कृत्य, तृप्तिम् = अलंबुद्धिम्. न = नैव, आययौ = आजगाम। उपमां विन्यस्यति—शुचेः = ग्रीष्मस्य, व्यपाये = व्यत्यये, (अपगते ग्रीष्मर्तौ इत्यर्थः) पयोमुचां = मेघानाम्, पृषतैः—बिन्दुभिः, सिक्तं = क्लिन्नम् वनराज्याः = अरण्यावल्याः, पल्वलम् = अल्पसरः, करी इव = गज इव। उपाघ्राय न तृप्तिं याति गजः तथैव दिलीपः।

सञ्जीविनी—तदिति। क्षितीश्वरो रहसि मृत्सुरभि मृदा सुगन्धि तस्या आननं तदाननं सुदक्षिणामुखमुपाघ्राय तृप्तिं नाययौ। कः कमिव। शुचिव्यपाये ग्रीष्मावसाने। 'शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोः सिते। ग्रीष्मे हुतवहेऽपि स्यादुपधाशुद्धमन्त्रिणि' इति विश्वः। पयोमुचां मेघानां पृषतैर्बिन्दुभिः। 'पृषन्ति बिन्दुपृषताः' इत्यमरः। सिक्तमुक्षितं वन राज्याः पल्वलमुपाघ्राय करी गज इव। अत्र करिवनराजिपल्वलानां कन्तिकामिनीवदनसमाधिरनुसन्धेयः। गर्भिणीनां मृद्भक्षणं लोकप्रसिद्धमेव। एतेन दोहदाख्यं गर्भलक्षणमुच्यते।

समासः—क्षितेः ईश्वरः क्षितीश्वरः (ष. त.)। मृदा सुरभि मृत्सुरभि, (तृ. त.) तत्। तस्याः आननं तदाननम् (ष. त.) तत् तदाननम्। शुचेः व्यपायः शुचिव्यपायः, तस्मिन् शुचिव्यपाये। वनानां राजिः वनराजिः, वनराजेः पल्वलं वनराजिपल्वलम्. तत् वनराजिपल्वलम्। करः (शुण्डा) अस्यास्तीति करी।

कोशः—'क्षोणिर्ज्या काश्यपी क्षितिः' 'ईश्वरः पतिरीशिता' 'रहश्चोपांशु चालिंगे' मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च' 'सुरभिर्घ्राणतर्पणः' 'आननं लपनं मुखम्' 'ज्येष्ठे शुक्रः शुचिस्त्वयम्। आषाढे' 'श्रेणी लेखास्तु राजयः' 'पल्वलं चाल्पसरः' कुञ्जरो वारणः करी' इति यथायथममरः।

भावार्थः—हस्ती यथा आषाढारम्भे स्वल्पवृष्टिबिन्दुभिः उक्षितम् अरण्यानीमध्यगतं स्वल्पजलाशयं समाघ्राय तृप्तिं न प्राप्नोति तथैवायं दिलीपः एकान्ते दोहदेन कृतमृद्भक्षणं मृद्गन्धवासितं सुदक्षिणामुखम् आघ्राय तृप्तो नाऽभूत्, इतोऽपि आघ्रातुम् ऐच्छदिति भावः।

हिन्दीश्लोकार्थः—भूपति राजा दिलीप ने एकान्तमें (गर्भिणियों को होने वाली इच्छा से) मिट्टी के खानेसे उत्पन्न सुगन्ध से युक्त सुदक्षिणा के मुख को

सूँघकर (चुम्बन लेते हुए) वैसे ही तृप्त नहीं हुए, जैसे की वर्षा ऋतु के आरम्भ में मेघों को बूदों से सींचे हुए वनों के मध्यमें स्थित छोटे तालाव (गड्ढे) को सूँघ कर हाथी तृप्त नहीं होता ॥ ३ ॥

दिवं मरुत्वा निव भोक्ष्यते भुवं दिगन्तविश्रान्तरथो हि तत्सुतः ।
अतोऽभिलाषे प्रथमं तथाविधे मनो बबन्धान्यरसान्विलङ्घ्य सा ॥४॥

सन्दर्भः-- द्रष्टव्यः श्लोक १ ।

प्रसङ्गः—अत्र दोहदा सुदक्षिणायाः मृद्भक्षणं वर्णितमस्ति ।

अन्वयः—हि दिगन्तविश्रान्तरथः तत्सुतः मरुत्वान् दिवम् इव भुवं भोक्ष्यते, अतः प्रथमं सा तथाविधे अभिलाषे अन्यरसान् विलंघ्य मनः बबन्धे ।

वाच्य०— हि दिगन्तविश्रान्तरथेन तत्सुतेन मरुत्वता द्यौरिव भूः भोक्ष्यते, अतः प्रथमं तया तथाविधेऽभिलाषें अन्यरसान् विलंघ्य मनो बबन्धे । (कर्म०)

चन्द्रिका--हि = यस्मात्, दिगन्तेषु = हरित्कोणेषु, विश्रान्तः=विरतः, रथः = शताङ्गः, यस्य स दिगन्तविश्रान्तरथः, अष्टास्वपि दिक्षु=अप्रविहतगतिरित्यर्थः, तत्सुतः = सुदक्षिणासुतः गर्भे स्थित इत्यर्थः, मरुत्वान् = इन्द्रः, दिवम् इव स्वर्ग यथा, भुवं = पृथिवीम्, (अखण्डामिति यावत्), भोक्ष्यते=पालयिष्यति, अतः = तस्मात्, प्रथमं=पूर्वम्, सा=सुदक्षिणा, तथाविधे=तादृशे, मृद्विकारूपे, अभिलाषे = खाद्यपदार्थे, अन्यरसान् = इतरभोग्यवस्तूनि, विलंघ्य = अतिक्रम्य, मनः = चित्तम्, बबन्ध = युयोज । गर्भिणीनां स्वाभाविकमृद्भक्षणप्रवृत्तौ पुत्रभूभोगसूचनमुत्प्रेक्षितमिति हेतूत्प्रेक्षा सिद्धविषयेति ।

संञ्जीविनी—दिवमिति । हि यस्माद्दिगन्तविश्रान्तरथश्चक्रवर्ती तस्याः सुतस्तत्सुतः । मरुत्वानिन्द्रः । 'इन्द्रो मरुत्वान्मघवा' इत्यमरः । दिवं स्वर्गमिव भुवं भोक्ष्यते । 'भुजोऽनवने' इत्यात्मनेपदम् । अतः प्रथमं सा सुदक्षिणा तथाविधे भूविकारे मृद्रूपे । अभिलष्यत इत्यभिलाषो भोग्यवस्तु तस्मिन् । कर्मणि घञ्प्रत्ययः । रस्यन्ते स्वाद्यन्त इति रसा भोग्यार्थाः । अन्ये च ते रसाश्च तान्विलङ्घ्य विहाय मनो बबन्ध । विदधावित्यर्थः । दोहदहेतुकस्य मृद्भक्षणस्य पुत्रभूभोगसूचनार्थत्वमुत्प्रेक्षते ।

समासः—दिशाम् अन्ताः दिगन्ताः (ष.त.), दिगन्तेषु विश्रान्तो रथो यस्य

सः (बहु.) दिगन्तविश्रान्तरथः । तस्याः सुतः तत्सुतः । मरुतः (देवाः) सन्त्यस्येति मरुत्वान् । तथा विधा यस्य सः तथाविधः (बहु.), तस्मिन् तथाविधे । अभिलष्यते इति (अभिलाषकर्मीक्रियते—कर्मणि घञ्) अभिलाषः, तस्मिन् अभिलाषे । रस्यन्ते इति रसाः, अन्ये च ते रसाश्च (कर्म.) अन्तरसाः, तान् अन्यरसान् ।

कोशः—'हि हेताववधारणे' 'दिशस्तु ककुभः' 'शताङ्गः स्यन्दनो रथः' 'सुतः पुत्रः स्त्रियां त्वमी । प्राह्वदं हितरं सर्वे' 'इन्द्रो मरुत्वान्मघवा' 'सुरलोको द्योदिवौ द्वे' 'पुंस्यादिः पूवपोरस्त्यप्रथमाद्याः' 'स्वान्तं हृन्मानसं मनः' इत्यमरः ।

भावार्थः—यथा इन्द्रः स्वर्गभोगं करोति तथा सुदक्षिणासुतः भूभोगं करिष्यति इति सूचयितुमिव सा अन्यखाद्यपदार्थान् परित्यज्य प्रथमं मृद्भक्षण प्रवृत्तेति भावः । गर्भिण्यो मृद्भक्षणे प्रवृत्ता भवन्ति प्राकृतिकरूपेण ।

हिन्दीश्लोकार्थः—जिस कारण से, दिशाओं के अंतोंमें (जाकर) विश्राम करने वाला उसका (सुदक्षिणा का) पुत्र, इन्द्र जैसे स्वर्ग को भोगता है, वैसे ही भूमण्डल का भोग करेगा, इस हेतु पहले वह (सुदक्षिणा) वैसी खाद्य वस्तु (मिट्टी) में अन्य भोज्य पदार्थों को त्याग कर मन लगायी ॥ ४ ॥

न मे ह्रिया शंसति किंचिदीप्सितं स्पृहावती वस्तुषु केषु मागधी ।
इति स्म पृच्छत्यनुवेलमादृतः प्रियासखीरुत्तरकोसलेश्वरः ॥ ५ ॥

सन्दर्भः—द्रष्टव्यः श्लोक १ ।

प्रसङ्गः—अत्र सगर्भायाः सुदक्षिणाऽभिलाषपरिज्ञानाय ।

अन्वयः—मागधी ह्रिया ईप्सितं मे न शंसति, 'अतः' केषु वस्तुषु मागधी स्पृहावती इति अनुवेलम् आदृतः प्रियासखीः उत्तरकोसलेश्वरः पृच्छति स्म ।

वाच्य०—मागध्या किञ्चित् न शस्यते ( कर्मवा० )। केषु वस्तुषु स्पृहावत्या 'भूयते' (भाववाच्य) आदृतेन उत्तरकोसलेश्वरेण प्रियासख्यः पृच्छ्यन्ते स्म (कर्म.) ।

चन्द्रिका—मागधी = मगधराजपुत्री सुदक्षिणा । ह्रिया = लज्जया, किञ्चित् = किमपि, ईप्सितं = वाञ्छितं, मे = मह्यं, न = नैव, शंसति = सूचयति । अतः' = तस्मात्, केषु वस्तुषु = केषु पदार्थेषु, स्पृहावती = काङ्‌

क्षायुक्ता, इति = अनेन प्रकारेण, अनुवेलम् = अनुक्षणम्, असकृदिति यावत्। आदृतः = आदरयुक्तः, 'सन् = भवन्', प्रियासखीः = सुदक्षिणा-वयस्याः 'न खलु प्रेम चलं सुहृज्जने' इत्यनुभवादिति भावः। उत्तरकोसलेश्वरः = उत्तर-कोसलाधिपतिः दिलीपः, पृच्छति स्म = अनुयुङ्क्ते स्म। 'प्रश्नोऽनुयोगः पृच्छा 'च इत्यमरः।

सञ्जीविनी—नेति। मगधस्य राज्ञोऽपत्यं स्त्री मागधी सुदक्षिणा। 'द्व्यञ्मगधकलिङ्गसूरमसादण्. इत्यण्प्रत्ययः। ह्रिया किञ्चित् किमपीप्सितमिष्टं मे मह्यं न शंसति नाचष्टे। केषु वस्तुषु स्पृहावतीत्यनुवेलमनुक्षणमादृत आदृत-वान्। कर्तरि क्तः। 'आदृतौ सादरार्चितौ, इत्यमरः। प्रियायाः सखीः सहचरी-रुत्तरकोसलेश्वरो दिलीपः। पृच्छति स्म पप्रच्छ। 'लट् स्मे' इत्यनेन भूतार्थे लट्। सखीनां विश्रम्भभूमित्वादिति भावः।

समासः—मगधस्य अपत्यं स्त्री मागधी। स्पृहा अस्या अस्तीति स्पृहावती। वेलायामित्यनुवेलम् (अव्ययीभा०), प्रियायाः सख्यः प्रियासख्यः, ताः, प्रिया-सखीः। उत्तराश्च ते कोसलाश्च उत्तरकोसलाः (कर्म०), उत्तरकोसलानाम् ईश्वरः उत्तरकोसलेश्वरः।

कोशः—'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' 'इच्छा काङ्क्षास्पृहेहातृड्वाञ्छा लिप्सा मनोरथः।' 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि।, इत्यमराः।

भावार्थः—दिलीपः सादरं वारं वारं च सुदक्षिणासखीः उपेत्य 'सुदक्षिणा किम् वाञ्छति, कस्मिन् वस्तुनि तस्या अभिलाषः, पृष्टापि लज्जया मे न सूच-यति सा' इति जिज्ञासते स्म।

हिन्दीश्लोकार्थ—'सुदक्षिणा शरम के मारे मुझसे अपनी इच्छा प्रकट नहीं करती, वह किन वस्तुओं में इच्छा रखती है' इस प्रकार बार बार आदर पूर्वक राजा सुदक्षिणा की सखियों से पूछते थे॥ ५॥

उपेत्य सा दोहददुःखशीलतां यदेव वव्रे तदपश्यदाहृतम्।
न हीष्टमस्य त्रिदिवेऽपि भूपतेरभूदनासाद्यमधिज्यधन्वनः॥ ६॥

सन्दर्भः - द्रष्टव्यः श्लोक १।

प्रसङ्गः—अत्र सगभार्यायाः सुदक्षिणायाऽभिवाञ्छितवस्तुनः सत्वरं प्राप्तेः वर्णनमस्ति।

अन्वयः—सा दोहददुःखशीलताम् उपेत्य यदेव वव्रे तद् आहृतम् अपश्यत्। हि, अधिज्यधन्वनः अस्य भूपतेः त्रिदिवेऽपि इष्टम् अनासाद्यं नाभूत्।

वाच्य०—तया यदेव वव्रे तद् आहृतम् अदृश्यत (कर्मवा०)। इष्टेनानासाद्येन नाभावि (भाववा०)।

चन्द्रिका—सा=सुदक्षिणा, दोहदेन=गर्भिणीच्छया, दुःखशीलतां=कष्टप्रकृतिताम्, उपेत्य=प्राप्य, यदेव=यमपि पदार्थम्, वव्रे=अभिललाषे, तत्=तं पदार्थम्, आहृतम्=आनीतम्, अपश्यत्=ददर्श। हि=यस्मात्कारणात्, अधिज्यम्=आरोपितशिञ्जीनीकम्, धनुः=शरासनं, यस्य तस्य अधिज्यधन्वनः, अस्य भूपतेः=एतस्य राज्ञः दिलीपस्य, त्रिदिवेऽपि=स्वर्गेऽपि, इष्टं=काङ्क्षितम्, अनासाद्यम्=अप्राप्यम्, नाभूत्=नाविद्यत्। 'अधिज्यधन्वनः' इति विशेषणात् वीरवरस्यास्य सर्वत्रानुल्लंघ्यशासनत्वात् अभीष्टं सर्वं प्राप्यमेवासीदिति भावः। अत एव 'अलङ्कारः परिकरः साभिप्राये विशेषणे' इति लक्षणलक्षितः परिकरालङ्कारः।

सञ्जीविनी—उपेत्येति। दोहदं गर्भिणीमनोरथः। 'दोहदं दौहृदं श्रद्धा लालसं च समं स्मृतम्' इति हलायुधः। सा सुदक्षिणा दोहदेन गर्भिणीमनोरथेन दुःखशीलतां दुःखस्वभावतामुपेत्य प्राप्य यद्वस्तु वव्रे आचकाङ्क्ष तदाहृतमानीतम्। भर्त्रेति शेषः। अपश्यदेव। अलभतेत्यर्थः। कुतः। हि यस्मादस्य भूपतेस्त्रिदिवेऽपि स्वर्गेऽपीष्टं वस्त्वनासाद्यमनवाप्यं नाभूत्। किं याच्यया? नेत्याह—अधिज्यधन्वन इति। नहि वीरपत्नीनामलभ्यं नाम किञ्चिदस्तीति भावः। अत्र वाग्भटः पादशोफो विदाहोऽन्ते श्रद्धा च विविधात्मिका' इति। एतच्च पत्नीमनोरथपूरणाकरणे दृष्टदोषसम्भवाद् न तु राज्ञः प्रीतिलौल्यात्। तदुक्तम्—देयमप्यहितं तस्य हितोपहितमल्पकम्। श्रद्धाविघाते गर्भस्य विकृतिश्च्युतिरेव वा॥" अन्यत्र च 'दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात्' इति।

समासः—दुःखञ्च (दुःखकरम्) तत् शीलञ्च दुःखशीलम्, (कर्म०) दोहदेन दुःखशीलं यस्याः सा दोहददुःखशीला (बहु०), दोहददुःखशीलायाः भावः दोहददुःखशीलता, तां दोहददुःखशीलताम्। आसादितुं योग्यमासाद्यम्, न आसा-

द्यम् अनासाद्यम्, अधि ज्या यस्य तत् अधिज्यम्, अधिज्यं धनुः यस्य सः (बहुव्रीहिगर्भो बहुव्रीहिः) अधिज्यधन्वा, तस्य अधिज्यधन्वनः ।

कोशः—'अथ दोहदम् । इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः' पीडा बाधा व्यथा दुःखम्' 'शीलं स्वभावे सद्वृत्तं' 'मौर्वी ज्या शिञ्जिनी गुणः' 'स्वर्गनाकत्रिदिवत्रिदशालयाः ।' इति यथायथममरः ।

भावार्थः—सुदक्षिणा अन्तर्वत्नी यद् यत् काङ्क्षति स्म तत्तद् तत्रागतम् अपश्यत् उचितमेवैतत् वीराग्रगण्यस्य दिलीपस्य स्वर्गेऽपि दुर्लभं किमपि नासीत् ('स्नेहेन वा दीयतां, भिया वा दीयताम्' वीरस्याप्राप्यं नास्ति) का कथा मर्त्ये ? (गर्भिण्याः तदानीं विलक्षणा इच्छा जायन्ते । तासामपूरणे गर्भे वैकल्यं भवतीति भिषजां सिद्धान्तः । अतः साधारणा अपि तत्र सयत्ना भवन्ति । )

हिन्दीश्लोकार्थः—सुदक्षिणा ने, गर्भिणियों को होने वाली इच्छाओं से दुःखी सी होकर जो ही चीज चाहा वह चीज उपस्थित देखा । क्योंकि धनुर्धारी महाराज दिलीप के लिए स्वर्ग में भी अभीष्ट वस्तु अप्राप्य नहीं थी । ( मर्त्यलोक में तो कहना ही क्या है ? ) ॥ ६ ॥

क्रमेण निस्तीर्य च दोहदव्यथां प्रचीयमानावयवा रराज सा ।
पुराणपत्रापगमादनन्तरं लतेव सन्नद्धमनोज्ञपल्लवा ॥७॥

सन्दर्भः—द्रष्टव्यः श्लोक १ ।

प्रसङ्गः—अत्र दोहदव्यथानन्तरं परिपुष्टाङ्गायाः सुदक्षिणायाः वर्णनमस्ति ।

अन्वयः—सा क्रमेण दोहदव्यथां निस्तीर्य प्रचीयमानावयवा 'सती' पुराणपत्रापगमाद् अनन्तरं सन्नद्धमनोज्ञपल्लवा लता इव रराज ।

वाच्य०—तया प्रचीयमानावयवया सन्नद्धमनोज्ञपल्लवया, लतया इव रेजे (कर्मवा०) ।

चन्द्रिका—सा=सुदक्षिणा, क्रमेण=कतिपयैः दिनैः, दोहदव्यथां=गर्भमनोरथपीडाम्, निस्तीर्य=अतीत्य, प्रचीयमानावयवा=उपचीयमानाङ्गी, सती=भवन्ती, उपमानं निरूपयति पुराणपत्राणां=प्राचीनवर्णानाम्, अपगमाद्=निपत-

नाद्, अनन्तरं=अनुपदम्, सन्नद्धाः=सम्बद्धाः, मनोज्ञाः=मनोहराः, पल्लवाः=किसलयाः, यस्या सा सन्नद्धमनोज्ञपल्लवाः, लता इव वल्ली यथा, रराज=अशोभत। लतासुदक्षिणयोरुपमानोपमेयभावः। शोभादानस्य साधारणधर्मस्य इवशब्दस्योपमावाचकस्यापि प्रयोगात्पूर्णोपमालङ्कारः।

सञ्जीविनी—क्रमेणेति। सा सुदक्षिणा क्रमेण दोहदव्यथां च निस्तीर्य प्रचीयमानावयवा पुष्यमाणावयवा सती। पुराणपत्राणामपगमान्नाशादनन्तरं सन्नद्धाः सञ्जाताः प्रत्यग्रत्वान्मनोज्ञाः पल्लवा यस्याः सा लतेव रराज।

समासः—दोहदस्य व्यथा दोहदव्यथा (तृ० त०), तां दोहदव्यथाम्। प्रचीयमानाः अवयवाः यस्याः सा (बहु०) प्रचीयमानावयवा। पुराणानि च तानि पत्राणि च पुराणपत्राणि (कर्म०), पुराणपत्राणाम् अपगमः पुराणपत्रापगमः (ष० त०), तस्मात् पुराणपत्रापगमात्। सन्नद्धाः मनोज्ञाः पल्लवाः यस्याः सा सन्नद्धमनोज्ञपल्लवा (त्रिपदबहु०)।

कोशः—'अङ्गं प्रतीकोऽवयवः' 'पुराणे प्रतनप्रत्नपुरातनचिरन्तनाः' 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्' 'वल्ली तु व्रततिर्लता' सन्नद्धो वर्मितः सज्जो दंशितो व्यूढकण्टकः।' मनोज्ञं मंजु मंजुलम्' पल्लवोऽस्त्री किसलयम्' इत्यमरः।

भावार्थः—सुदक्षिणा कालक्रमेण पञ्चषमासानन्तरं दोहदक्लेशमपाकृत्य परिपुष्टांगी तथा शुशुभे, यथा जीर्णपत्रपतनानन्तरं संलग्ननवीनकिसलया लता शोभते इति भावः।

हिन्दीश्लोकार्थः—सुदक्षिणा क्रम से 'दोहद'-कष्ट को पार कर परिपुष्टांग वाली होकर वैसे ही शोभा देने लगी जैसे कि पुराने पत्तों के गिर जाने के अनन्तर लगे नूतन तथा सुन्दरपल्लव वाली लता शोभा देती है ।।७।।

दिनेषु गच्छत्सु नितान्तपीवरं तदीयमानीलमुखं स्तनद्वयम्।
निरस्चकार भ्रमराभिलीनयोः सुजातयोः पङ्कजकोशयोः श्रियम् ।।८।।

सन्दर्भः—द्रष्टव्यः श्लोक १।

प्रसङ्गः—अत्र गर्भधारणात्सुदक्षिणायाः पीवरस्तनद्वयस्य वर्णनमस्ति।

अन्वयः—दिनेषु गच्छत्सु 'सत्सु' नितान्तपीवरम् आनीलमुखं तदीयं स्तनद्वयं भ्रमराभिलीनयोः सुजातयोः पङ्कजकोशयोः श्रियं तिरश्चकार।

वाच्य०—नितान्तपीवरेण आनीलमुखेन तदीयेन स्तनद्वयेन पद्मकोशयोः श्रीस्तिरश्चक्रे (कर्म०)।

चन्द्रिका—दिनेषु=वासरेषु, गच्छत्सु=व्यत्ययमानेषु, सत्सु इति शेषः, नितान्तपीवरम्=एकान्तस्थूलम्, आनीलमुखं=परितः श्यामाग्रभागम्, स्तनाग्रभागे=चूचुकनामके कृष्णवर्णमित्यर्थः। तदीयं=सुदक्षिणासम्बन्धि, स्तनद्वयं=पयोधरयुग्मम्, भ्रमराभि नीलयोः=द्विरेफावृतयोः, सुजातयोः=सुन्दरयोः, पङ्कजकोशयोः=नलिनमकुलयोः, श्रियं=सौन्दर्यम्, तिरश्चकार=न्यक्कृतवत्। कृष्णचूचुक=कुचयुगलं भ्रमरोपविष्टमरविन्दमुकुलम् अवमानयामास—अत्यन्तं तत्सादृश्य भजते स्मेत्यर्थः। प्रतीपालङ्कारस्य पञ्चमः प्रकारः उपमानकैमर्थ्यवर्णनरूपः (कुवलयानन्दानुसारेण)।

सञ्जीविनी—दिनेष्विति। दिनेषु दोहददिवसेषु गच्छत्सु सत्सु नितान्तपीवरमतिस्थूलम्। आसमन्तान्नीले मुखे चूचुके यस्य तत्। तदीयं स्तनद्वयम्। भ्रमरैरभिलीनयोरभिव्याप्तयोः सुजातयोः सुन्दरयोः पङ्कजकोशयोः पद्ममुकुलयोः श्रियं तिरश्चकार। अत्र वाग्भटः—'अम्लेष्टता स्तनौ पीनौ श्वेतान्तौ कृष्णचूचुकौ' इति।

समासः—नितान्तं पीवरं नितान्तपीवरम्। आनीलं मुखं यस्य तत् आनीलमुखम् (बहु०)। स्तनयोः द्वयं स्तनद्वयम् (ष.त.)। तस्या इदं तदीयम्। भ्रमरैः अभिलीनौ भ्रमराभिलीनौ (तृ.त.), तयोः भ्रमराभिलीनयोः। पङ्कजयोः कोशौ, पङ्कजकोशौ, तयोः पङ्कजकोशयोः।

कोशः—'घस्रो दिनाहनी' 'तीव्रैकान्तनितान्तानि' 'पीनपीव्नी तु स्थूलपीवरे' 'कोशोऽस्त्री कुड्मले खड्गपिधानार्थौघदिव्ययोः' 'स्तनौ कुचौ' 'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयाः।'

भावार्थ—सुदक्षिणायाः कृष्णचूचुकौ प्रवृद्धौ स्तनौ भ्रमरोपविष्टौ सुन्दरौ पद्मकोशौ निजशोभया तिरस्कृतवन्तौ। स्तनौ पद्मकोशापेक्षया अधिकसुन्दरौ आस्तामिति भावः।

हिन्दीश्लोकार्थः—कुछ दिन बीतने पर अधिक स्थूलता को प्राप्त और चारों ओर से श्याम अग्रभाग वाले सुदक्षिणा के दोनों स्तनों ने भ्रमरों से व्याप्त सुन्दर कमल के दो कलियों को नीचा दिखाया। (स्तनद्वय कमल-कलियों से अधिक सुन्दर थे) ॥ ८ ॥

निधानगर्भामिव सागराम्बरां शमीमिवाभ्यन्तरलीनपावकाम्।
नदीमिवान्तः सलिलां सरस्वतीं नृपः ससत्त्वां महिषीममन्यत ॥९॥

सन्दर्भः—द्रष्टव्यः श्लोक १।

प्रसङ्गः—अत्र गर्भिण्याः सुदक्षिणायाः विषये दिलीपस्य विविधोपमा वर्णितास्ति।

अन्वयः—नृपः ससत्त्वां महिषीं निधानगर्भां सागराम्बराम् इव, अभ्यन्तरलीनपावकां शमीम् इव, अन्तःसलिलां सरस्वतीं नदीम् इव, अमन्यत।

वाच्य०—नृपेण ससत्त्वा महिषी, निधानगर्भा सागराम्बरेव, अभ्यन्तरलीनपावका शमीव, अन्तःसलिला सरस्वती नदीव, अमन्यत (कर्म०)।

चन्द्रिका—नृपः=राजा दिलीपः, ससत्त्वां=सगर्भाम्, महिषीं=राज्ञीं सुदक्षिणाम्। यया सहोपविश्य राज्याभिषेको भवति सा 'महिषी' कथ्यते। निधानगर्भाम्=अन्तःशेवधिं धारयन्तीम्, सागराम्बरां=धरित्रीम्, इव=यथा, अभ्यन्तरे=अन्तराले, लीनः=प्रच्छन्नः, पावकः=अनलः, यस्या सा, तां शमीमिव=शमीतरुमिव, अन्तःसलिलाम्=अन्तःस्थितजलाम्, सरस्वतीमिव=सरस्वती नदीं यथा, अमन्यत=ज्ञातवान्। निधान-पावक-सलिलैः गर्भस्य सादृश्यवर्णनात् श्रीप्रतापपावनत्वानि भाविसन्तानस्य आगर्भसिद्धानीति द्योतितम्। उपमालङ्कारः।

सञ्जीविनी—निधानेति। नृपः ससत्त्वामापन्नसत्त्वां गर्भिणीमित्यर्थः। 'आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी इत्यमरः। महिषीं, निधानं निधिर्गर्भे यस्यास्तां सागराम्बरां समुद्रवसनाम्। भूमिमिवेत्यर्थः। 'भूतधात्री रत्नगर्भा जगती सागराम्बरा' इति कोशः। अभ्यन्तरे लीनः पावको यस्यास्तां शमीमिव। शमीतरौ वह्निरस्तीत्यत्र लिङ्गं 'शमीगर्भादग्निं जनयतीति'। अन्तःसलिलामन्तर्गतजलां सरस्वतीं नदीमिव। अमन्यत। एतेन गर्भस्य अभ्युदयतेजस्वित्वपावनत्वानि विवक्षितानि।

समासः—निधानं गर्भे यस्याः सा (बहु.), निधानगर्भा, तां निधानगर्भाम्। सागर एवाम्बरं यस्या सा सागराम्बरा (बहु), तां सागराम्बराम्। अभ्यन्तरे लीनः पावको यस्या सा अभ्यन्तरलीनपावका (बहु), ताम् अभ्यन्तरलीनपावकाम्। अन्तःसलिलं यस्याः सा अन्तः सलिला (बहु.), ताम् अन्तःसलिलाम्। सरांसि सन्त्यस्यामिति सरस्वती तां सरस्वतीम्। सत्त्वेन सह वर्तते इति ससत्त्वा, तां ससत्त्वाम्।

कोशः—'सरस्वान् सागरोऽर्णवः' 'अम्बरं व्योम्नि वाससि' शमी सक्तुफला शिवा' 'अथ नदी सरित्।' 'कृशानुः पावकोऽनलः' सलिलं कमलं जलम्' 'आपन्नसत्त्वा स्यात् गुर्विण्यन्तर्वत्नी च गर्भिणी।' 'जगती सागराम्बरा' 'कृताभिषेका महिषी' इति सर्वत्रामराः।

भावार्थः—राजा गुरुवशिष्ठनन्दिन्यादिप्रसादात् सुदक्षिणागर्भं निधिना पावकेन सलिलेन च समानं तथा सुदक्षिणां पृथिवी शमी सरस्वतीतुल्याञ्च मेने।

हिन्दीश्लोकार्थः—राजा दिलीप ने गर्भवती रानी सुदक्षिणा को, अपने अन्दर खजाना रखनेवाली धरित्री और भीतर अग्निको छिपाये हुए शमीवृक्ष यथा अन्तःस्थित जलवाली सरस्वती नदी के समान समझा। अर्थात् उपमानों से भंगत पुत्र को भाग्यवान् तथा तेजस्वी एवं दूसरों को भी पवित्र करनेवाला समझा। ९॥

प्रियाऽनुरागस्य मनः समुन्नतेर्भुजार्जितानां च दिगन्तसम्पदाम्।
यथाक्रमं पुंसवनादिकाः क्रिया धृतेश्च धीरः सदृशीर्व्यधत्त सः ॥१०॥

सन्दर्भः—द्रष्टव्यः श्लोक १।

प्रसङ्गः—अत्र सुदक्षिणां समायाते गर्भे सम्पदाभिलाषानुसारं दिलीपेन पुंसवनादि संस्कारसम्पादनं वर्णितमस्ति।

अन्वयः—धीरः सः प्रिययानुगस्य मनः समुन्नतेः भुजार्जितानां दिगन्तसम्पदाञ्च धृतेः च सदृशीः पुंसवनादिकाः क्रियाः यथाक्रमं व्यधत्त।

वाच्य०—धीरेण तेन क्रियाः सदृश्यः व्यधीयन्त। (कर्मवा०)

चन्द्रिका—धीरः=मनीषी यद्वा अविकृतचेताः, सः=दिलीपः, प्रियानु

रागस्य=भार्यायां प्रीतेः, मनःसमुन्नतेः=हृदयविशालतायाः, उदारभावस्येति यावत्। भुजेन=बाहुना, अर्जितानां=सम्पादितानाम्, दिगन्तेषु=आशान्तेषु (विद्यमानानां), सम्पदां=श्रियाम्,च तथा, धृतेः पुत्रोत्पत्तिहर्षस्य, च अपि, सदृशीः=अनुरूपाः, पुंसवनम् आदि=पुंसवनाख्यः संस्कारः प्रथमः, यासां ताः, क्रियाः=कर्माणि, व्यधत्त=अकरोत्। महता विजृम्भणेन पुंसवनादिसंस्कारमनुष्ठितवानित्यर्थः।

सञ्जीविनी—प्रियेति। धीरः स राजा प्रियायामनुरागस्य मनसः समुन्नतेरौदार्यस्य भुजेन भुजबलेन करेण वाऽर्जितानां न तु वाणिज्यादिना। दिगन्तेषु सम्पदाम्। धृतेः, 'पुत्रो मे भविष्यती, ति सन्तोषस्य च। धृतेर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु, इति विश्वः। सदृशीरनुरूपाः। पुमान्सूयतेऽनेनेति पुंसवनं तदादिर्यासां ताः क्रिया यथाक्रमं क्रममनतिक्रम्य व्यधत्त कृतवान्। आदिशब्देनादवलोमनसीमन्तोन्नयने गृह्येते। अत्र 'मासि द्वितीये तृतीये वा पुंसवनं यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्, इति पारस्करः। चतुर्थेऽनवलोमनम्, इत्याश्वलायनः। षष्ठेऽष्टमे वा सीमन्तोन्नयनम्, इति याज्ञवल्क्यः।

समासः—प्रियायाम् अनुरागः प्रियानुरागः (स० त०), तस्य प्रियानुरागस्य। मनसः समुन्नतिः मनःसमुन्नतिः, तस्याः मनःसमुन्नतेः (ष० त०) भुजेन अर्जिताः भुजार्जिताः (तृ० त०) तासां भुजार्जितानाम्। दिशाम् अन्ताः दिगन्ताः (ष० त०), दिगन्तेषु विद्यमानाः सम्पदः दिगन्तसम्पदः (मध्यमपदलोपी समा०), तासां दिगन्तसम्पदाम्। क्रममनतिक्रम्य वर्तते इति यथाक्रमम् (अव्ययीभावस०)। पुमान् सूयते अनेनेति पुंसवनम्, पुंसवनम् आदिर्यासां ताः (आदिरिति क्रियाया विशेषणत्वात् पुंसवने आदिक्रियाया विधेयत्वाद्वा स्त्रीत्वम्) पुंसवनादिकाः, ताः पुनस्तदेव।

कोशः—'धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः।, ('विकारहेतावपि विक्रियन्ते येषां न चेतांसि त एव धीराः,—कालिदासः) 'स्वान्तं हृन्मानसं मनः, सम्पदि। सम्पत्तिः श्रीश्च लक्ष्मीश्च, इत्यमरः। धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु, इति विश्व।

भावार्थः—दिलीपः प्रियानुरागौदार्यभुजबलसम्पादितैश्वर्याणाम् अनु-

रूपान् शास्त्रोक्तान् पुंसवन-अनवलोभन-सीमन्तोन्नयनसंस्कारान् तत्तत्समये कारयामास। महता समारोहेण वैभवेन च सर्वं कार्यमनुष्ठितवानिति भावः।

हिन्दीश्लोकार्थः—विद्वान् दिलीपने सुदक्षिणा पर जो प्रीति थी, अपने मन में जो उदारता थी, और बाहुबलों से अर्जित ( कमायी गई ) जो दिशाओं में सम्पत्तियाँ थीं, तथा पुत्रोत्पत्ति का जो आनन्द था, इन सबके अनुरूप पुंसवनादि ( गर्भस्थ शिशु के संस्कार ) संस्कारों को शास्त्रोक्त विधि से मनाया। अर्थात् बड़े ही समारोह से इन संस्कारों को कराया ॥१०॥

सुरेन्द्रमात्राऽऽश्रितगर्भगौरवात् प्रयत्नमुक्तासनया गृहागतः।
तयोपचाराञ्जलिखिन्नहस्तया ननन्द पारिप्लवनेत्रया नृपः॥११॥

सन्दर्भः—द्रष्टव्यः श्लोक १।

प्रसङ्गः—अत्र सगर्भायाः सुदक्षिणायाः दिलीपे समायाते प्रणामः वर्णितोऽस्ति।

अन्वयः—गृहागतः नृपः सुरेन्द्रमात्राश्रितगर्भगौरवात् प्रयत्नमुक्तासनया उपचाराञ्जलिखिन्नहस्तया पारिप्लवनेत्रया तया ननन्द।

वाच्य०—गृहागतेन नृपेण तया ननन्दे ( भाववाच्यं, यद्वा 'नृपेण सा ननन्दे' इति कर्मवाच्यं भवितुमर्हति )।

चन्द्रिका—गृहागतः=प्रासादं प्रतिनिवृत्तः, क्वापि बहिर्गत इति यावत्, नृपः=राजा दिलीपः, सुरेन्द्राणाम्=अष्टदिक्पालकानाम्, मात्राभिः=भागैः, आश्रितस्य=आवासीकृतस्य, गर्भस्य=भ्रूणस्य, गौरवात्=भारात्, प्रयत्नेन=प्रयासेन, मुक्तं=त्यक्तं, आसनम्=उपवेशपीठादि, यया तया समागतं=राजानं विलोक्य आसनत्यागपूर्वकं कृताभ्युत्थानाया इत्यर्थः, उपचारस्य=गौरवप्रदानस्य, अञ्जलौ=करद्वयमुकुलीकरणे, खिन्नौ=क्लिष्टौ, हस्तौ=करौ, यस्यास्तया, पारिप्लवे=चञ्चले, नेत्रे=नयने, यस्यास्तया, तया=सुदक्षिणया, ननन्द=जहर्ष, गर्भभरिणा सर्वेषु अङ्गेषु शैथिल्यं गर्भिणीस्वाभाविकं निरीक्ष्य दिलीप आनन्दमन्वभवदिति भावः।

सञ्जीविनी—सुरेन्द्रेति। गृहागतो नृपः सुरेन्द्राणां लोकपालानां मात्राभिरंशैराश्रितस्यानुप्रविष्टस्य गर्भस्य गौरवाद्भारात्प्रयत्नेन मुक्तासनया।

आसनादुत्थितयेत्यर्थः । उपचारस्याञ्जलावञ्जलिकरणे खिन्नहस्तया पारिप्लवनेत्रया तरलाक्ष्या । 'चञ्चलं चैव पारिप्लवपरिप्लवे' इत्यमरः । तया सुदक्षिणया ननन्द । सुरेन्द्रमात्राऽऽश्रित इत्यत्र मनुः—'अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः, इति ।

समासः—गृहम् आगतः गृहागतः । सुराणाम् इन्द्राः सुरेन्द्राः, सुरेन्द्राणां मात्राः सुरेन्द्रमात्राः ( ष० त० ), सुरेन्द्रमात्राभिः आश्रितः सुरेन्द्रमात्राश्रितः ( तृ. त. ) सुरेन्द्रमात्राश्रितश्चासौ गर्भश्च सुरेन्द्रमात्राश्रितगर्भः (कर्म०) (गुरोः भाव-गौरवम्) सुरेन्द्रमात्राश्रितगर्भस्य गौरवं सुरेन्द्रमात्राश्रितगर्भगौरवम् (ष.त.) तस्मात् सुरेन्द्रमात्राश्रितगर्भगौरवात् । प्रयत्नेन मुक्तम् आसनं यया सा प्रयत्नमुक्तासना (बहु०) । तया प्रयत्नमुक्तासनया । उपचारस्य अञ्जलिः उपचाराञ्जलिः (ष.त.) उपचाराञ्जलौ खिन्नौ हस्तौ यस्याः सा (बहु०) उपचाराञ्जलिखिन्नहस्ता, तया उपचाराञ्जलिखिन्नहस्तया । पारिप्लवे नेत्रे यस्याः सा (बहु.) पारिप्लवनेत्रा, तया पारिप्लवनेत्रया ।

कोशः—'गृहं गेहोदवसितम्, 'पीठआसनम्, 'तौ युनावञ्जलिः पुमान् 'हस्तौ तु पाणिनक्षत्रे, 'चञ्चलं तरलञ्चैव पारिप्लवपरिप्लवे' इति यथायथममराः । 'मात्रं त्ववधृतौ स्वार्थे कात्स्न्र्ये मात्रा परिच्छदे । अक्षरावयवे द्रव्ये मानेऽल्पे कर्णभूषणे ॥' इति विश्वः ।

भावार्थः—लोकपालांशसमन्वितत्वाद् गर्भभारात् क्लेशेनासनं मुञ्चति, आदरार्थं करसंयोजनेऽपि खेदः प्रतिभाति, नेत्रे च प्रायेण चञ्चले, सुदक्षिणया इदं सर्वं गर्भचेष्टितं दर्शं दर्शं दिलीपस्य हर्षो भवति स्म ।

हिन्दीश्लोकार्थः—महल में आये हुए दिलीप, लोकपालों के अंगो से सम्मिलित होने से गर्भ की गुरुता के कारण कठिनाई से अपने आसन छोड़ने वाली, आदरार्थ हाथ जोड़ने में भी जिसे खेद हो रहा है, तथा चंचल नयन वाली ऐसी सुदक्षिणा से प्रसन्न हुए । अर्थात् गर्भभार से उनके सभी कार्यों में स्वाभाविक शिथिलता को देखकर दिलीप आनन्दित हुए ॥११॥

कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथ गर्भभर्मणि ।
पतिः प्रतीतः प्रसवोन्मुखीं प्रियां ददर्श काले दिवमिश्रितामिव ॥ १२ ॥

सन्दर्भः—द्रष्टव्यः श्लोक १।

प्रसङ्गः—अत्र सुदक्षिणां प्रसवोन्मुखीं ज्ञात्वा दिलीपस्य प्रसादः वर्णितोऽस्ति

अन्वयः—अथ कुमारभृत्याकुशलैः आप्तैः भिषग्भिः गर्भभर्मणि अनुष्ठिते 'सति' काले प्रसवोन्मुखीं प्रियाम् अभ्रितां दिवम् इव पतिः प्रतीतः 'सन्' ददर्श।

वाच्य०—प्रसवोन्मुखी प्रिया अभ्रिता द्यौरिव पत्या प्रतीतेन 'सता' ददृशे। (कर्म.)।

चन्द्रिका—अथ=पुंसवनादिसंस्कारानन्तरम्, कुमारभृत्यायां = बालचिकित्सायाम्, कुशलैः=दक्षैः, आप्तैः = स्निग्धैः, न तु व्यवसायिभिरिति यावत्। भिषग्भिः=चिकित्सकैः, गर्भभर्मणि=गर्भभरणे, अनुष्ठिते=आचरिते, 'सति' काले=दशमे मासे, आकाशपक्षेकाले = वर्षारम्भे, प्रसवस्य=गर्भमोचनस्य, उन्मुखीम्, =अभिमुखीम्, अविलम्बप्रसवामित्यर्थः। प्रियाम् प्रेयसीम् सुदक्षिणाम्, अभ्रितां=मेघयुक्ताम्, दिवमिव=अम्बरं यथा, पतिः = भर्ता, दिलीपः, प्रतीतः = मुदितः, सन्=भवन्, ददर्श=व्यलोकयत्।

सञ्जीविनी—कुमारेति। अथ कुमारभृत्या बालचिकित्सा। 'संज्ञायां समजनिषद०' इत्यादिना क्यप्। तस्यां कुशलैः कृतिभिः। 'कृति कुशल इत्यपि' इत्यमरः। आप्तैर्हितैर्भिषग्भिर्वैद्यैः। 'भिषग्वैद्यौ चिकित्सके' इत्यमरः। गर्भस्य भर्मणि। भरणे पोषणे भर्म' इति हैमः। 'भृतिर्भर्म' इति शाश्वतः। भृञो मनिच्प्रत्ययः। 'गर्भकर्मणि' इति पाठे गर्भाधानप्रतीतावौचित्यभङ्गः। अनुष्ठिते कृते सति। काले दशमे मासि। अन्यत्र ग्रीष्मावसाने प्रसवस्य गर्भमोचनस्योन्मुखीम्। आसन्नप्रसवामित्यर्थः। 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने, इत्यमरः। प्रियां भार्याम्। अभ्राण्यस्याः सञ्जातान्यभ्रिता ताम्। 'तदस्य सञ्जातं तारकादिभ्य इतच्' इतीतच्प्रत्ययः। दिवमिव। पतिर्भर्ता। प्रतीतो हृष्टः सन्। 'ख्याते हृष्टे प्रतीतः' इत्यमरः। ददर्श दृष्टवान्।

समासः—कुमाराणां भृत्या कुमारभृत्या (ष.त.), कुमारभृत्यायां कुशलाः कुमारभृत्याकुशलाः (स.त.), तैः कुमारभृत्याकुशलैः। गर्भस्य भर्म गर्भभर्म (ष.त.) तस्मिन् गर्भभर्मणि। प्रसवस्य उन्मुखी (ष.त.) प्रसवोन्मुखी, ताम्

प्रसवोन्मुखीम् । अभ्राणि अस्याः सञ्जातानीति अभ्रिता, तां अभ्रिताम् । अभ्रं (वा) अस्याः सञ्जातं तादृशीम् ।

कोशः—'भृत्ये दासे भृतौ भृत्या' इति मेदिनी । 'प्रवीणे' निपुणाभिज्ञ-विज्ञनिष्णातशिक्षिताः । वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि ।' इत्यमरः । 'भरणे पोषणे भर्म' इति हैमः । 'भिषग्वैद्यो चिकित्सके' 'आप्तप्रत्ययितौ समौ' 'धवः प्रियः पतिर्भर्ता' ख्याते हृष्टः प्रतीतः' 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भ-मोचने' 'द्यौदिवौ द्वे स्त्रियामभ्रं व्योमपुष्करमम्बरम्' 'अभ्र मेघो वारिवाहस्त-नयित्नुर्बलाहकः' इति चामराः ।

भावार्थः—निपुणैः हितकरैश्च वैद्यैः गर्भपोषणे सम्यक् कृते सति पूर्णगर्भां आसन्नप्रसवां पत्नीं, दिलीपः हर्षपूर्णः, वर्षर्तोः आरम्भे मेघावृतां द्यामिव विलोकयति स्म ।

हिन्दीश्लोकार्थः—पुंसवनादिसंस्कारों के अनन्तर 'कुमारचिकित्सा' में निपुण विश्वसनीय वैद्यों के द्वारा गर्भ की पुष्टि कर चुकने पर यथासमय दसवें महीने में (एवं आकाश पक्ष में वर्षा ऋतु के आरम्भ में) प्रसव की ओर उन्मुख प्रिय पत्नी सुदक्षिणा को, मेघावृत गगनस्थली की भाँति, राजा दिलीप ने आनन्दित होकर देखा ।। १२ ।।

ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसम्पदम् ।
असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम् ।।१३।।

सन्दर्भः—द्रष्टव्यः श्लोक १ ।

प्रसङ्गः—अत्र सुदक्षिणया पुत्रोत्पत्तिः वर्णिताऽस्ति ।

चन्द्रिका—ततः=तदनन्तरम्, शचीसमा=इन्द्राणीसदृशी, 'सा' सुदक्षिणा, समये=प्रसवावसरे प्राप्ते सति, उच्चसंश्रयैः=उन्नतस्थानस्थितैः, असूर्यगैः= भास्करमप्रविशद्भिः, नास्तं गतैरिति यावत्, पञ्चभिः=पञ्चसङ्ख्यकैः ग्रहैः= बुधादिभिः, सूचिता=ज्ञापिता भाग्यसम्पत्=दैवानुकूल्यम् यस्य तादृशं, पुत्रं= त्रिसाधना=त्रीणि प्रभावोत्साहमन्त्ररूपाणि, साधनानि=जनकानि, यस्याः सा त्रिसाधना शक्तिः प्रभावशक्ति मन्त्रशक्ति उत्साहशक्तिरूपा, अक्षयम्, अनश्वरमिति

यावत् । अर्थं द्रव्यम्, इव=यथा, असूत=प्रसूतवती, जनयामासेत्यर्थः । यथा साधनत्रयजनिता शक्तिरनन्तमर्थं जनयति तथेत्युपमालङ्कारः ।

सञ्जीविनी—ग्रहैरिति । शच्येन्द्राण्या समा । 'पुलोमजा शचीन्द्राणी' इत्यमरः । सा सुदक्षिणा समये प्रसूतिकाले सति दशमे मासीत्यर्थः । दशमे मासि जायते इति श्रुतेः । उच्चसंस्थैस्तुङ्गस्थानगैरसूर्यगैरनस्तमितैः कैश्चिद् यथासम्भवं पञ्चभिर्ग्रहैः सूचिता भाग्यसम्पद्यस्य तं पुत्रम् । त्रीणि प्रभावमन्त्रोत्साहात्मकानि साधनान्युत्पादकानि यस्याः सा त्रिसाधना शक्तिः । 'शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः' इत्यमरः । अक्षयमर्थमिव । असूत । 'षूङ् प्राणिगर्भविमोचने' इत्यात्मने पदेषु पठयते । तस्माद्धातोः—कर्त्तरि लङ् अत्रेदमनुसन्धेयम्—'अजवृषभमृगाङ्गनाकुलीराझषवणिजौ च दिवाकरादितुङ्गाः । दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः ।।' इतिसूर्यादीनां सप्तानां ग्रहाणां मेषवृषभादयो राशयः श्लोकोक्त क्रमविशिष्टा उच्चस्थानानि, स्वस्वतुङ्गापेक्षया सप्तमस्थानानि च नीचानि । तत्रोच्चेष्वपि दशमादयो राशिः त्रिंशांशा यथाक्रममुच्चेसु परमाच्चा नीचेषु परमनीचा इति जातकश्लोकार्थः । अत्रांशस्त्रिंशो भागः । यथाऽऽह नारदः—'त्रिंशद्भागात्मकं लग्नम्' इति । सूर्यप्रत्यासत्तिर्ग्रहाणामस्तमयो नाम । तदुक्तं लघुजातके—'रविणाऽस्तमयो योगो वियोगस्तूदयो भवेत्' इति । ते च स्वोच्चस्थाः फलन्ति नास्तगा नापि नीचगाः । तदुक्तं राजमृगाङ्के—'स्वोच्चे पूर्णं स्वक्षकेऽर्द्धं सुहृद्भे पादं द्विड्भेऽल्पं शुभं खेचरेन्द्रः । नीचस्थायी नास्तगो वा न किञ्चित्पादं नूनं स्वत्रिकोणे ददाति ।।' इति, तदिदमाह कविरुच्चसंस्थैरसूर्यगैरिति च । एवं सति यस्य जन्मकाले पञ्चप्रभृतयो ग्रहाः स्वोच्चस्थाः स एव तुङ्गो भवति । तदुक्तं कूटस्थीये—'सुखीनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजानः । एकद्वित्रिचतुर्भिर्जायन्तेऽतः परं दिव्याः ।।' इति । तदिदमाह पञ्चभिरित ।

अन्वयः—ततः शचासमा समये 'सति' उच्चसंश्रयैः असूर्यगैः पञ्चभिः ग्रहैः सूचितभाग्यसम्पदं पुत्रं त्रिसाधना शक्तिः अक्षयम् अर्थम् इवासूत ।

वाच्य०—शचीसमया सूचितभाग्यसम्पत् पुत्रस्त्रिसाधनया शक्त्याऽक्षयोऽर्थ इवासूयत । (कर्म०)

समासः—शच्या समा ( तृ० त० ) उच्चः संश्रयो येषां ते उच्चसंश्राः (बहु०), तैः उच्चसंश्रयैः। सूर्यं गच्छन्तीति सूर्यंगाः, न सूर्यंगाः असूर्यंगाः (नञ्तत्पु०) तैः असूर्यगैः। भाग्यस्य सम्पद् भाग्यसम्पद्, सूचिता भाग्यसम्पद् यस्य सः सूचितभाग्यसम्पद् (बहु०), तं सूचितभाग्यसम्पदम्। त्राणि साधनानि यस्याः सा त्रिसाधना (बहु०)। न विद्यते क्षयो यस्य सः अक्षयः (बहु०) तम् अक्षयम्।

कोशः—'पुलोमजा शचीन्द्राणी' 'वाच्यलिंगाः समस्तुल्यः' 'समयाः शपथाचारकालसिद्धान्तसंविदः।' 'उच्चप्रांशून्नतोदग्राः स्थितास्तुंगे' 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः।' 'संपदि। सम्पत्तिः श्रीश्च लक्ष्मीश्च' 'सुतः पुत्रः' 'अर्थरैविभवा अपि' इति चामराः।

भावार्थः—यथा राज्ञः प्रभावजा मन्त्रजा उत्साहजा च शक्तिः अविनाशि ऐश्वर्यं जनयति तथा सुदक्षिणाऽपि पञ्चभिः उच्चस्थानस्थितैः अनुस्तंगतैः ग्रहैः सूचितैश्वर्य पुत्रं समुदपादयत् इति भावः।

हिन्दीश्लोकार्थः—उसके बाद इन्द्राणी के समान सुदक्षिणा ने प्रसवकाल में उच्चस्थान में स्थित, सूर्य के पास जाने से अस्त को न प्राप्त होने वाले पाँच ग्रहों के द्वारा सूचित भाग्यसम्पत्ति से युक्त पुत्र को, प्रभाव, उत्साह, मन्त्र इन तीन साधनों, उत्पन्न शक्ति जैसें अनन्त द्रव्य संपत्ति को उत्पन्न करती है, उसी भाँति उत्पन्न किया ॥ १३ ॥

दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे।
बभूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाभ्युदयाय तादृशाम् ॥१४॥

सन्दर्भः—द्रष्टव्यः श्लोक सं० १।

प्रसङ्गः—अत्र रघोरुत्पत्तिकाले सर्वत्र प्रसादमयवातावरणस्य वर्णनमस्ति।

अन्वयः—तत्क्षणं दिशः प्रसेदुः, मरुतःसुखाः ववुः, अग्निः प्रदक्षिणार्चिः 'सन्' हविः आददे। 'इत्थं' सर्वं शुभशंसि बभूव। हि तादृशां भवः लोकाभ्युदयाय 'भवति'।

वाच्य०—दिग्भिः प्रसेदे (भाववा०), मरुद्भिः सुखवंवे ( भाव ) अग्निना

प्रदक्षिणार्चिषा 'सता'. हविरादद़े (कर्म०)। सर्वेण शुभशंसिना बभूवे, (भाव०)। ताहशां भवेन लोकाभ्युदयाय भूयते ( भाव० )।

चन्द्रिका--तत्क्षणं=तस्मिन्नेव समये, दिशः=हरितः, प्रसेदुः=निर्मलाः बभुवुः। मरुतः=पवनाः, सुखाः=सुखकराः, शैत्यमान्द्यादियुक्ता इति यावत्, ववुः=प्रवहन्ति स्म। अग्निः=पावकः, प्रदक्षिणार्चिः=दक्षिणाभिमुखज्वालः, 'सन्=भवन्' हवि' हवनीयद्रव्यं घतचर्वादिकम्, आददे=जग्राह। 'इत्थम्' अनेन =प्रकारेण, सर्वं=दिगग्निवाय्वादिकं निखिलं, शुभशंसि=कल्याणसूचकं. बभूव=आसीत्। तादृशां=रघुसदृशानाम्, भवः=जनिः, लोकानां=जनानां विष्टपानाम् वा, अभ्युदयाय=अभिवृद्धये, भवतीति शेषः।

सञ्जीविनी--दिश इति। तत्क्षणं तस्मिन् क्षणे। 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। दिशः प्रसेदुः प्रसन्नाः बभूवुः। मरुतो वाताः सुखा मनोहरा ववुः। अग्निः प्रदक्षिणादि मन हविराददे स्वीचकार। इत्थं सर्वं शुदशंसि शुभसूचकं बभूव। तथा हि तादृशां रघुप्रकाराणां भवो जन्म लोकाभ्युदाय। भवतीति शेषः। ततो देवा अपि सन्तुष्टा इत्यर्थः।

समासः—स चासौ क्षणश्च तत्क्षणं, (कर्म०) तं तत्क्षणम्। प्रगता दक्षिणं प्रदक्षिणा, प्रदक्षिणा अर्चिः यस्य सः प्रदक्षिणार्चिः ( बहु० )। शुभं शंसतीति शुभशंसि। लोकानाम् अभ्युदयः लोकाभ्युदयः, तस्मै लोकाभ्युदयाय।

कोशः—'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः।' 'लोकस्तु भुवने जने' 'हि हेतावववधारणे।' 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' 'समीरमारुतमरुत्' 'अर्चिर्हेतिः शिखाः स्त्रियाम्' 'कल्याणं मङ्गलं शुभम्' इति चामराः: 'भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोः' इति मेदिनी।

भावार्थः—पुत्रोत्पत्तेः अनन्तरक्षणे एव दिशः प्रसन्नाः संवृत्ताः। सुखप्रदाः वायवः प्रावहन्, अग्निः प्रदक्षिणाभिमुखज्वालः पुरोडाशादिकं स्वीचकार। एवं रीत्या सर्वं वातावरणं मङ्गलसूचकमासीत्। रघुसदृशा महानुभावाः लोककल्याणार्थमेव जन्म गृह्णन्ति खलु इति भावः।

हिन्दीश्लोकार्थः--उस समय में दिशाएँ निर्मल हुईं, सुखकर वायु बहने लगे. अग्नि दक्षिण की ओर ज्वाला निकालता हुआ चरु, घी आदि लेने लगा।

इस प्रकार सभी शुभसूचक लक्षण प्रकट होने लगें। क्योंकि उस प्रकार के ( रघु जैसे ) महानुभावों का जन्म लोककल्याणार्थ ही होता है ॥ १४ ॥

अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा।
निशीथदीपाः सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव ॥१५॥

सन्दर्भः—प्रस्तुतोऽयं श्लोकः महाकवि कालिदासप्रणीते रघुवंशमहाकाव्ये तृतीये सर्गे विद्यते।

प्रसङ्गः—महाकवि कालिदास विरचिते रघुवंश महाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके रघो तेजसः सूतिकागृहस्थस्य दीपस्य निस्तेजतायाः वर्णनमस्ति।

अन्वय०—अरिष्टशय्यां परितः विसारिणा सुजन्मनः तस्य निजेन तेजसा सहसा हतत्विषः निशीथदीपाः आलेख्यसमर्पिता इव बभूवुः।

वाच्यः—हतत्विड्भिः निशीथदीपैः आलेख्यसमर्पितैरिव बभूवे। ( भाववा० )।

चन्द्रिका—अरिष्टस्य=सूतिकागृहस्य, शय्यां=तल्पं, परितः=अभितः, शय्यायाः समन्तादिति यावत्, विसारिणा=प्रसर्पता, सुजन्मनः=सुजातस्य, माङ्गल्यकारिजनुषः इति भावः। तस्य=शिशोः, निजेन=स्वीयेन, तेजसा=महसा, सहसा=अतर्किततया हतत्विषः=अभिभूतप्रकाशाः, निशीथदीपाः=अर्द्धरात्रप्रदीपाः, आलेख्ये=चित्रे, समर्पिताः=लिखिताः, इव=यथा, बभूवः=जाताः। प्रकृष्टप्रकाशस्य पुरः स्वल्पप्रकाशा न प्रकाशन्ते यथा रवेः पुरो नक्षत्रादीनि स्वल्पतेजांसीति भावः।

सञ्जीविनी—अरिष्टशय्यामिति। 'अरिष्टं सूतिकागृहम्' इत्यमरः। अरिष्टे सूतिकागृहे शय्यां तल्पं परितोऽभितः 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' इति द्वितीया। विसारिणा सुजन्मनः शोभनोत्पत्तेः। 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः' इत्यमरः। तस्य शिशोर्निजेन नैसर्गिकेण तेजसा सहसा हतत्विषः क्षीणकान्तयो निशीथदीपा अर्द्धरात्रप्रदीपाः। 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः। आलेख्यसमर्पिताश्चित्रार्पिता इव बभूवुः। निशीथशब्दो दीपानां प्रभाऽऽधिक्यसम्भावनार्थः।

समासः—अरिष्टे अरिष्टस्य वा शय्या अरिष्टशय्या, ताम् अरिष्टशय्याम्। विसरिति इति विसारि, तेन विसारिणा। सुष्ठु जन्म यस्य सः सुजन्मा, तस्य सुजन्मनः। निशीथस्य दीपाः निशीथदीपाः ( ष० त० )। हता त्विड् येषां ते हतत्विषः ( बहु० )। आलेख्ये समर्पिताः आलेख्यसमर्पिताः ( त० त० )।

कोशः—'अरिष्टं सूतिकागृहम्' 'समन्ततस्तु परितः सर्वतो विष्वगित्यपि'। 'विसृत्वरो विसृमरोविसारी च प्रसारिणि।' 'अतर्किते तु सहसा' 'आलेख्याश्चर्ययोश्चित्रम्' 'जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः' 'अर्द्धरात्रनिशीथौ द्वौ' इत्यमराः।

भावार्थः—शिशुजन्मसमये सूतिकागृहस्यार्पिताः दीपाः तस्य शिशोः समन्तात् प्रसृता प्राकृतिकतेजसा अर्द्धरात्रेऽपि मन्दतेजसो बभूवुः।

हिन्दीश्लोकार्थः—प्रसव गृह में शय्या के चारों ओर फैलने वाले पुण्यजन्मा उस शिशु रघु के स्वाभाविक तेज से सहसा जिसकी कान्ति मन्द पड़ गई है, ऐसे दीप आधी रात के समय में चित्र में लिखित हुए से निस्तेज हुए॥ १५॥

जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसम्मिताक्षरम्।
अदेयमासीत् त्रयमेव भूपतेः शशिप्रभे छत्रमुभे च चामरे॥ १६॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके पुत्रोत्पत्तिसमये दिलीपेन सम्पादितदानं वर्णितमस्ति।

अन्वयः—भूपते अमृतसम्मिताक्षरं पुत्रजन्म शंसते शुद्धान्तचराय जनाय त्रयमेव अदेयम् आसीत् 'तत्' शशिप्रभं छत्रम् उभे च चामरे।

वाच्य०—शशिप्रभेण छत्रेणोभाभ्यां चामराभ्याञ्च 'इति' त्रयेणैव अदेयेन अभूयत (भाववा०)।

चन्द्रिका—भूपतेः=धरित्रीश्वरस्य, दिलीपस्य, अमृतेन=सुधया, सम्मितानि=तुल्यानि, अक्षराणि=वर्णाः, यस्मिन् तत् अमृतसम्मिताक्षरम्। कुमारजन्म=सुतजननम्, शंसते=वदते, शुद्धान्ते=अन्तःपुरे, चराय=सेवकाय, जनाय=पुरुषाय, त्रयमेव=अग्रे कथ्यमानानि त्रीण्येव वस्तूनि, अदेयं = दानानर्हम्, आसीत् =

अभूत्। किं तद् इत्याह—शशिनः=चन्द्रस्य; प्रभेव=कान्तिरिव, प्रभा=कान्तिः, यस्य तत् छत्रम्, आतपत्रम्=श्वेतच्छत्रमित्यर्थः। उभे=द्वे, प्रकीर्णके च. 'चामरन्तु प्रकीर्णकम्' इत्यमरः। राज्ञोऽसाधारणचिह्नभूतं श्वेतच्छत्रं चामरयुगलं च विहायाऽन्यत् सर्वं दातुं राजा प्रस्तुत आसीदित्यर्थः।

सञ्जीविनी—जनायेति। भूपतेर्दिलीपस्यामृतसम्मिताक्षरममृतसमानाक्षरम्। 'सरूपसमसम्मिताः' इत्याह दण्डी। कुमारजन्म पुत्रोत्पत्तिं शंसते कथयते शुद्धान्तचरायाऽन्तःपुरचारिणे जनाय त्रयमेवादेयमासीत्। तत् किं शशिप्रभमुज्ज्वलं छत्रम् उभे चामरे च। छत्रादीनां राज्ञः प्रधानाङ्गत्वादिति भाव।

समासः—शुद्धान्ते चरतीति शुद्धान्तचरः (स० त०), तस्मै शुद्धान्तचराय। कुमारस्य जन्म कुमारजन्म, तत् कुमारजन्म ( ष० त० )। अमृतेन सम्मितान्यक्षराणि यस्मिंस्तत् अमृतसम्मिताक्षरं ( बहु० ), तत्. अमृतसम्मिताक्षरम्। पुत्रस्य जन्म पुत्रजन्म, तत् पुत्रजन्म। दातुं योग्यं देयं, न देयम् अदेयम् ( नञ्त० )। शशः अस्त्यास्तीति शशी. शशिनः प्रभेव प्रभा यस्य तत् शशिप्रभम् ( बहु० )।

कोशः—'शुद्धान्तश्चावरोधश्च' 'पीयूषममृतं सुधा' 'सुतः पुमः' 'जनुर्जननजन्मानि' 'जनिरुत्पत्तिरुद्भवः।' 'छत्रं त्वातपत्रम्' 'चामरन्तु प्रकीर्णकम्।' इत्यमराः।

भावार्थः—अत्यधिकानन्दप्रस्य पुत्रजन्मसमाचारस्य सूचकाय अन्तःपुरजनाय राजा छत्रचामरातिरिक्तं सर्वं वस्तु महार्घं हारकटकादिकं पारितोषिकरूपेण दातुं सन्नद्ध आसीत्। बहुमूल्यानि वस्तूनि पारितोषिकरूपेण दत्तवान्।

हिन्दीश्लोकार्थः—राजा दिलीप 'पुत्र जन्म हुआ है' इस प्रकार के अमृत समान मधुर अक्षर युक्त बात सुनाने वाले अन्तःपुर के आदमी को चन्द्र के कान्तियक्त छत्र एवं दो चामर से अतिरिक्त किसी भी वस्तु देने को प्रस्तुत थे। केवल वे ही तीन चीज देने योग्य नहीं—ऐसा मानते थे ॥ १६ ॥

निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिबतः सुताननम्।
महोदधेः पूर इवेन्दुदर्शनाद् गुरुः प्रहर्षः प्रबभूव नात्मनि ॥१७॥

प्रसङ्ग—महाकवि कालिदास विरचिते रघुवंशमहाकाव्ये तृतीये

विद्यमानेऽस्मिन् श्लोके दिलीपस्य शिशुदर्शनात् परमप्रमोदः र्णितोऽस्ति ।

अन्वयः—निवातपद्मस्तिमितेन चक्षुषा कान्तं सुताननं पिबतः नृपस्य गुरुः प्रहर्षः, इन्दुदर्शनाद् 'गुरुः' महोदधेः पूर इव आत्मनि न प्रबभूव ।

वाच्य०—गुरुणा प्रहर्षेण महोदधेः गुरुणा पूरेणेव आत्मनि न प्रबभूवे । ( भाव० )

चन्द्रिका—निवाते=वायुरहितप्रदेशे, (यत्) पद्मं=कलमं, तद्वत् स्तिमितेन=निष्कम्पेण, चक्षुषा=लोचनेन, कान्तं=मञ्जुलम्, सुताननं=तनयवदनम्, पिबतः=सस्पृहं विलोकयतः, नृपस्य=राज्ञो दिलीपस्य, गुरुः=महान्, प्रहर्षः=प्रकृष्टानन्दः, इन्दुदर्शनात्=चन्द्रविलोकनात, महोदधेः=महासागरस्य, पूरः=जलराशिः, इव=यथा, आत्मनि=शरीरे न प्रबभूव=अवस्थातुं नाशकत् । हर्षः=शरीरान्तरवकाशं नालभत, अतः बहिः प्रकटो बभवेत्यर्थः । अत्रोपमालंकारः—राजहर्षः महोदधिपूर इव आत्मनि ( स्वदेहे ) स्थातुं नापारयत् इति वर्णनात् हर्षपूरयोः उपमानोपमेयभावः, निजशरीरेऽवस्थानासामर्थ्यं साधर्म्यं सादृश्यवाचकश्च इवशब्द इति पूर्णोपमा ।

सञ्जीविनी—निवातेति । निवातो निर्वातप्रदेशः । 'निवातावाश्रयावातौ' इत्यमरः । तत्र यत् पद्म तद्वत्स्तिमितेन निष्पन्देन चक्षुषा नेत्रेण कान्तं सुन्दरं सुताननं पुत्रमुखं पिबतस्तृष्णया पश्यतो नृपस्य गुरुरुत्कटः प्रहर्षः ( कर्त्ता ) इन्दुदर्शनात् गुरुर्महोदधेः पूरो जलौघ इव । आत्मनि शरीरे न प्रबभूव स्थातुं न शशाक । अन्तर्न माति स्मेति यावत् । न ह्यल्पाधारेऽधिकं मीयत इति भावः । यद्वा हर्षं आत्मनि स्वस्मिन्विषये न प्रबभूव । आत्मानं नियन्तुं न शशाक । किन्तु बहिर्निर्जगामेत्यर्थः ।

समासः—निवाते पद्म निवातपद्मम् ( स० त० ), निवातपद्मवत् स्तिमितं निवातपद्मस्तिमितम् ( उपमानपूर्वपदकर्म० ), तेन निवातपद्मस्तिमितेन । नृन् पातीति नृपः, तस्य नृपस्य । सुतस्य आननं सुताननम् (ष०त०, तत् सुताननम् । महांश्चासौ उदधिश्च महोदधिः ( कर्म ), तस्य महोदधेः । इन्दोः दर्शनम् इन्दुदर्शनम् ( ष०त० ), तस्मात् इन्दुदर्शनात् ।

कोशः—'निवातावाक्षयावातौ' 'वा पुंसि पद्मं नलिनम्' 'ईक्षणं चक्षुरक्षिण 'नृपभूपमहीक्षित' 'कान्तं मनोरमं रुच्यम्' 'सुतः पुत्रस्त्रियां त्वमी' 'आननं लप मुखम्' 'उदन्वानुदधिः' 'इन्दुः कुमुदबान्धवः' 'मुत्प्रीतिः प्रमदो हर्षः' 'आत्मा यत्नं धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च।' इति चामराः। 'पूरः स्यादम्भसां वृद्धौ इत्यनेकार्थ०।

भावार्थ—राजा दिलीपः सुन्दरं सुतमुखं निश्चलनयनेन पश्यन् चन्द्रदर्शनात् समुद्र इव हर्षोद्वेल्लित आसीत्।

हिन्दीश्लोकार्थ—वायुरहित प्रदेश में स्थित कलम के समान निश्चल नेत्र से सुन्दर पुत्रमुख को चाव के साथ देखते हुए राजा दिलीप का आनन्द (पुत्रमुख निहारने से उत्पन्न), चन्द्र के देखने से महान् समुद्र के जलप्रवाह के समान शरीर में ही रहने में समर्थ न हो सका। अर्थात् बाहर निकल आया। (चन्द्रोदय होने पर समुद्र की जलराशि जैसे ऊपर उछलने लगती है उसी प्रकार पुत्रमुख देखनेवाले राजा का हर्ष शरीर के बाहर प्रकट होने लगा)॥ १७॥

स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते।
दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ ॥१८॥

प्रसङ्ग—महाकविकालिदास विरचिते रघुवंश महाकाव्ये तृतीय-सर्गे विद्यमानेऽस्मिन् श्लोके विविधसंस्कारे सञ्जाते रघोरधिकं देदीप्यमानं वर्णितमस्ति।

अन्वयः—सः दिलीपसूनुः तपस्विना पुरोधसा तपोवनाद् एत्य अखिले जातकर्मणि कृते 'सति' प्रयुक्तसंस्कारः आकरोद्भवः मणिरिव अधिकं बभौ।

वाच्य०—तेन दिलीपसूनुना प्रयुक्तसंस्कारेण आकरोद्भवेन मणिनेवाधिकं बभे। (भाववा०)

चन्द्रिका—सः=प्रकृतः, दिलीपसूनुः, तपस्विना=प्रकृष्टतपोयुक्तेन,=पुरोधसा=पुरोहितेन, वसिष्ठमहर्षिणा, तपोवनाद्=धर्मारण्यात्, एत्य=आगत्य, अखिले=समस्ते, जातकर्मणि=जातकर्माख्यसंस्कारे, कृते=आचरिते, 'सति' प्रयुक्तः=कृत, संस्कारः=शास्त्रोल्लेखनादिः प्रतियत्नः, यस्य सः तथोक्तः,=

आकरोद्भव=खन्युत्पन्नः, मणिरिव=महार्हाश्मेव, अधिकं=भूरि, बभौ=चकासे। स्वयं तेजस्वी शिशुः तपस्विवसिष्ठेन संस्कृतः इतोऽधिकं शुशुभे यथा आकरोत्पन्नो मणिः शाणोल्लेखादिना अधिकं शोभते तथेति उपमालंकारः—शिशुमण्योः उपमानोपमेयभावः, जातकर्मादिसंस्कारेण शाणोल्लेखनादिना चाधिकप्रकाशनं साधारणो धर्मः इवशब्दश्चोपमावाचक इति पूर्णोपमा। अत्र बिम्बप्रतिबिम्बभावापन्नः साधारणो धर्मः।

सञ्जीविनी—स इति। स दिलीपसूनुः। तपस्विना पुरोधसा पुरोहितेन। 'पुरोधास्तु पुरोहितः' इत्यमरः। वशिष्ठेन। तपस्वित्वात्तदनुष्ठितं कर्म सवीर्यं स्यादिति भावः। तपोवनादेत्मागत्य। अखिले समग्रे जातकर्मणि जातस्य कर्त्तव्य संस्कारविशेषे कृते सति। प्रयुक्तः संस्कारः शाणोल्लेखनादिर्यस्य स तथोक्तः। आकरोद्भवः खनिप्रभवः 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः। मणिरिव। अधिकं बभौ। वसिष्ठमन्त्रप्रभावात्तेजिष्ठोऽभूदित्यर्थः। अत्र मनुः—'प्राङ् नाभिवर्धनात्पुंसो जातकर्म विधीयते' इति।

—समासः— दिलीपस्य सूनुः दिलीपसूनुः (ष० त०)। तपसः वनं तपोवनम्, तस्यात् तपोवनात्। जातस्य कर्म जातकर्म, तस्मिन् जातकर्मणि। प्रयुक्तः संस्कारः यस्य स प्रयुक्तसंस्कारः। आकराद् उद्भवतीत्याकरोद्भवः।

कोशः—'तपस्वी मुनिदीनयोः' 'पुरोधास्तु पुरोहितः' 'खनिः स्त्रियामाकरः स्यात्' 'रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च।' इति चामरः। 'संस्कारः प्रतियत्नेऽनुभावे मानसकर्मणि' इति मेदिनी।

भावार्थः—स्वतस्तेजस्वी स बालः तपस्विवरेण वसिष्ठेन कृतजातकर्मसंस्कारः, सन् आकरोत्पन्नः श्रेष्ठजातिः मणिः स्वतो दीप्तिमान् शाणोल्लेखसंस्कारेण यथाऽधिकं शोभते तथा शुशुभे इति भावः।

हिन्दीश्लोकार्थः—वह दिलीप शिशु (स्वयं जन्म से तेजस्वी) तपोवन से आकर तपस्वी पुरोहित वसिष्ठजी के द्वारा जातकर्म संस्कार किये जाने पर खान से निकले हुए उस मणि की भाँति जिसका शान पर चढ़ाना, आदि संस्कार हो चुका है, अधिक शोभित होने लगा ॥ १८ ॥

सुखश्रवा मङ्गलतूर्यनिस्वनाः प्रमोदनृत्यैः सह वारयोषिताम्।
न केवलं सद्मनि मागधीपतेः पथि व्यजृम्भन्त दिवौकसामपि ॥१९॥

प्रसङ्ग—रघुवंशमहाकाव्ये तृतीयेसर्गे विद्यमानेऽस्मिन् श्लोके रघोत्पत्तौ मङ्गलवाद्यप्रचारः वर्णितोऽस्ति ।

अन्वयः—सुखश्रवा मङ्गलतूर्यनिःस्वना वारयोषितां प्रमोदनृत्यैः सह मागधीपतेः सद्मनि केवलं न व्यजृम्भन्त, 'अपितु' दिवौकसां पथि अपि व्यजृम्भन्त ।

वाच्य०—सुखश्रवैर्मङ्गलतूर्यनिः स्वनैः प्रमोदनृत्यै सह व्यजृम्भन्त ॥ ( भाव० )

चन्दिका—सुखश्रवाः=सुखप्रदश्रवणाः, कर्णप्रिया इति यावत् । मङ्गल-तूर्याणां=शुभवाद्यानां (मृदङ्गादीनां), निःस्वनाः=नादाः, वारयोषितां=गणिका-नाम् प्रमोदनृत्यैः=आनन्दनर्तनैः, सह=साकम्, मागधीपतेः=सुदक्षिणाप्रियस्य=दिलीपस्य, सद्मनि=भवने, राजप्रासादे इत्यर्थः, केवलम्=एव, न व्यजृम्भन्त=न प्रावर्धन्त, 'अपितु' दिवौकसां स्वर्गवासिनाममराणाम्, पथ्यपि=मार्गेऽपि,= आकाशेऽपि, व्यजृम्भन्त=ववृधिरे । देवा अपि स्वांशत्वात् स्वोपकारित्वाच्च सानन्दं दुन्दुभीन् ध्वनयामासुरित्यर्थः ।

सञ्जीविनी— सुखेति । सुखः सुखकरः श्रवः श्रवणं येषां ते सुखश्रवाः श्रुतिसुखा इत्यर्थः । मङ्गलतूर्यनिस्वना मङ्गलवाद्यध्वन्यो वारयोषितां वेश्यानाम् । 'वारस्त्री गणिका वेश्या रूपाजीवा' इत्यमरः । प्रमोदनृत्यैर्हर्ष-नर्तनैः सह मागधीपतेर्दिलीपस्य पद्मनि केवलं गृह एव न व्यजृम्भन्त । किन्तु द्यौर्लोको येषां ते दिवौकसो देवाः । पृषोदरादित्वात्साधुः । तेषां पथ्याकाशेऽपि व्यजृम्भन्त । तस्य देवांशत्वाद् देवोपकारित्वाच्च देवदुन्दुभयोऽपि नेदुरिति भावः ।

समासः—सुखः श्रवः येषां ते सुखश्रवा (बहु०) । मङ्गलस्य मङ्गलकराणि वा ) तूर्याणि मङ्गलतूर्याणि, मङ्गतूर्याणां निःस्वनाः मङ्गलतूर्यनिःस्वना । प्रमोदस्य नृत्यानि प्रमोदनृत्यानि (ष.त.) तैः प्रमोदनृत्यै । वारस्य (जनसमूहस्य एकदिवसस्य वा ) योषितः वारयोषितः, तासां वारयोषिताम् । मगधस्यापत्यं स्त्री मागधी, मागध्याः पति मागधीपतिः, तस्य मागधीपतेः । द्यौः ओकः येषां ते दिवौकसः (बहु०) ।

कोशः—'कल्याणं मङ्गलं शुभम्' 'ध्वनिध्वानरवस्वनाः' वारस्त्री गणिका वेश्या' 'लास्यं नृत्यं च नर्तने' 'प्रमोदामोदसम्मदाः' 'साकं सत्रा समं सह' 'वेश्म सद्म निकेतनम्' निर्णीते केवलमिति त्रिलिङ्गंत्वेकक्रत्स्नयोः' 'त्रिदिवेशा दिवौकसा' 'मार्गाध्वपन्थानः पदवी सृतिः' इति चामराः ।

भावार्थः—पुत्रजन्मावसरे न केवलं राजप्रासाद एव कर्णमधुरं नृत्यगीत-वाद्यादिकं भवति स्म, अपितु देवा अपि प्रमुदिताः आकाशमार्गे नृत्यगीतादिकं कुर्वन्ति स्मेति भावः ।

हिन्दीश्लोकार्थः—कान को सुख देने वाली मङ्गलवाद्य मृदङ्गादि की ध्वनि एवं वेश्याओं के आनन्द नृत्य, सुदक्षिणा के स्वामी महाराज दिलीप के प्रासाद में ही नहीं बढ़ रहे थे, किन्तु देवताओं के मार्ग आकाश में भी ( बढ़ रहे थे, वहाँ भी देव-दुन्दुभियाँ बजने लगीं और स्वर्गवेश्या-अप्सराओं का नाच भी होने लगा ) ॥१९॥

न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः ।
ऋणाभिधानात्स्वयमेव केवलं तदा पितृणां मुमुचे स बन्धनात् ॥२०॥

प्रसङ्गः—रघुवंशमहाकाव्ये तृतीयेसर्गे विद्यमानेऽस्मिन् श्लोके संयताभावे रघोत्पत्तौ दिलीपस्य पितृऋणमुक्तिः वर्णितास्ति ।

अन्वयः—रक्षितुः तस्य संयतः न बभूव, सुतजन्महर्षितः 'सन्' यं विसर्जयेत् । सः तदा पितृणाम् ऋणाभिधानात् बन्धनात् केवलं स्वयमेव मुमुचे ।

वाच्य०—संयतेन न बभूवे, सुतजन्महर्षितेन यो विसर्ज्येत, तेन तदा स्वयं मुमुचे । (भाववाच्य-कर्मवाच्य-कर्मकर्तृ०)

चन्द्रिका—रक्षितुः=सम्यक् रक्षणशीलस्य, तस्य = दिलीपस्य, संयतः= सन्दानितः कारागृहे बद्धकरचरण इत्यर्थः, न बभूव=नासीत् । सुतजन्मना= पुत्रोत्पत्त्या, हर्षितः=प्रमोदितः, 'सन्' यं=बद्धं, बन्दितमिति यावत्, विसर्जयेत्= विमोचयेत् । सः=दिलीपः, तदा=तस्मिन् अवसरे, पितृणां=पूर्वजानाम्, ऋणा-भिधानात्=पर्युदञ्चननाम्नः 'स्यादृणं पर्युदञ्चनम्' इत्यमरः । बन्धनात्= संयमनात्, केवलं=यथा तथा क्रियाविशेषणमेतत् । एकाकियेवेत्यर्थः । स्वयमेव

आत्मनैवं मुमुचे मुक्तोऽभूत् । संयतस्य अभावे रक्षितृत्वादिति हेतूपन्यासेन समर्थनाद् काव्यलिङ्गालङ्कारः । 'समर्थनयीस्यार्थस्य काव्यलिङ्गं समर्थनम्' इति तल्लक्षणात् ।

सञ्जीविनी—नेति । रक्षितुः सम्यक्पालनशीलस्य तस्य दिलीपस्य । अत एव चौराद्यभावात् संयतो बद्धो न बभूव नाभूत् । किं नेनात आत—विसर्जयेदिति । सुतजन्मना हर्षितस्तोषितः सन् यं बद्धं विसर्जयेद्विमोचयेत् । किन्तु स राजा तदा पितॄणांऋणाभिधानाद् बन्धनात्केवलं यथा तथा स्वयमेव । एक एवेत्यर्थः । 'केवलः कृत्न एकश्च केवलश्चावधीरितः' इति शाश्वतः । मुमुचे, कर्मकर्त्तरि लिट् । स्वयमेव मुक्त इत्यर्थः । अस्मिन्ननर्थे—'एष वा अनृणो यः पुत्री ।' इति श्रुति प्रमाणम् ।

समासः—सुतस्य जन्म सुतजन्म (ष० त०), सुतजन्मनाहर्षितः (तृ० त०) सुतजन्महर्षितः । ऋणमित्यभिधानं यस्य तद् (बहु०) ऋणाभिधानम्, तस्मात् ऋणाभिधानात् ।

कोशः—'बद्धे कीलितसंयतौ' 'सुत पुत्रः' 'जनुर्जननजन्मानि' 'स्यादृणं पर्युदञ्चनम् ।' इत्यमरः ।

भावार्थः—दुष्टदमनपूर्वकं शिष्टापालनं हि रक्षणं, तत् सम्यगनुतिष्ठति दिलीपः अतस्तस्य राज्ये बद्ध एव नासीत् यं हर्षावसरे कारागारात् मोचयेत् । अद्य पर्यन्तं स्वयं निस्सन्तानत्वात् पितृऋणेन बद्ध आसीत् । साम्प्रतं पुनः स सन्तानोत्पत्त्या तस्मात् ऋणात् स्वयं मुक्तोऽभूदित्यर्थः ।

हिन्दीश्लोकार्थः—अच्छी तरह रक्षा करने वाले दिलीप महाराज का कोई अपराधी कैदी ही न था, जिसे पुत्रोत्सव में छोड़ दें, किन्तु यह महाराज उस समय पितृ ऋणरूपी बन्धन से अकेले स्वयं ही मुक्त हो गये ॥ २० ॥

श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः ।
अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसम्भवम् ॥२१॥

प्रसङ्गः—कालिदासविरचिते रघुवंशमहाकाव्ये तृतीयसर्गे विद्यमानेऽस्मिन् श्लोके गत्यर्थकज्ञानार्थकधातोः सकाशात रघोः नामकरणं वर्णितमस्ति ।

अन्वयः—अर्थवित् पार्थिवः अयम् अर्भकः श्रुतस्य अन्तं यायात्, तथा

युधि परेषाम् अन्तञ्च 'यायात्' इति धातोः गमनार्थम् अवेक्ष्य आत्मसम्भवं नाम्ना रघुं चकार ।

वाच्य०—अर्थविदा पार्थिवेन अनेनार्भकेण श्रुतस्यान्तो यायेत । आत्मसम्भवो नाम्ना रघुश्चक्रे (कर्म०) ।

चन्द्रिका—अर्थविद्=शब्दार्थज्ञाता, पार्थिवः=नृपः दिलीपः, अयं=पुरोवर्ती, अर्भकः=बालः, श्रुतस्य=शास्त्रस्य, अन्तं=सिद्धान्तम्, यायात्=गच्छेत्, सम्भावनायां लिङ् । तथा=एवमेव, युधि=युद्धे, परेषां=शत्रूणाम्, अन्तञ्च=अवसानमपि, यायाद्=व्रजेद् शक्यार्थे लिङ्, इति हेतोः धातोः लंघधातोः, गमनार्थं गत्यर्थम्, अवेक्ष्य=पर्यालोच्य, आत्मसम्भवं=पुत्रम्, नाम्ना=अभिधानेन, रघुं=रघुनामानम्, चकार=चक्रे । अश्वकर्ण-क्षीरसागरभट्टाचार्यादिवत् किमपि रूढं नाम पुत्रस्य मा भूत्, अपि तु अन्वर्थं नाम भवेदिति विचार्य 'रघुः' इति (गमनकर्ता) नामकरणं विदधे इत्यर्थः ।

सञ्जीविनी—श्रुतस्येति । अर्थविच्छब्दार्थज्ञः पार्थिवः पृथिवीश्वरो दिलीपः । अयमर्भको बालकः श्रुतस्य शास्त्रस्यान्तं पारं यायात् । तथा युधि परेषां शत्रूणामन्तं पारं च यायात् । यातुं शक्नुयादित्यर्थः । 'शकि लिङ् च' इति शक्यार्थे लिङ् । इति हेतोर्धातोः 'अघिवघिलघिगत्यर्थाः' इति लघिधातोर्गमनाख्यमर्थंवित्तादवेक्ष्यालोच्य आत्मसम्भवं पुत्र नाम्ना रघुं चकार । 'लङ्घिबह्योर्नलोपश्च' इत्युप्रत्यये 'बालमूललघ्वलमंगुलीनां वा लो रत्वामापद्यते' इति वैकल्पिके रेफादेशे रघुरिति रूपं सिद्धम् । अत्र शङ्खः—'अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते' इति ।

समासः—अर्थं वेत्तीति अर्थविद् । पृथिव्या ईश्वरः पार्थिवः । गमनमेवार्थो गमनार्थः तं गमनार्थम् ( अवधारणापूर्वककर्म० ) । लङ्घते इति रघुः तं रघुम् । आत्मनः सम्भवो यस्य सः आत्मसम्भवः (बहु०), तम् आत्मसम्भवम् ।

कोशः—'अर्थोऽभिधेयरैवस्तु' 'राजा राट् पार्थिवक्ष्माभृत्' 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' 'श्रुतं शास्त्रावधृतयोः' 'अन्तो जघन्यं चरमम्' 'आख्याह्वे अभिधानञ्च नामधेयञ्च नाम च ।' इति हेतुप्रकरण—' इति चामराः ।

भावार्थः—'द्वादशेऽहनि पिता नाम कुर्यात्' इति स्मृतेः दिलीपः स्वसुतस्य अर्थवत् नाम चिकीर्षन् गत्यर्थकधातुनिष्पन्नं 'रघुः' इति नाम निहितवान्। शास्त्रस्यान्तं शत्रूणाञ्च अन्तम् ( परं पारं ) गच्छेत् इति मनसिकृत्येदं नाम कृतवान् इति भावः।

हिन्दीश्लोकार्थः—शब्दार्थ के ज्ञाता, राजा दिलीप यह बालक शास्त्र के सिद्धान्त को (जान) जा सकेगा, ऐसे ही युद्ध में शत्रुओं का अन्त (नाश) को भी जा ( कर ) सकेगा, इसलिए 'लघि' धातु गमनार्थक है ऐसा विचार कर अपने बालक का नाम 'रघु' रखा ॥ २२ ॥

पितुः प्रयत्नात्स समग्रसम्पदः शुभैः शरीरावयवैर्दिने दिने।
पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः ॥ २२ ॥

प्रसङ्गः—कालिदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके शिशोः रघोः शुक्लबालचन्द्रश्च इव वृद्धिः वर्णितास्ति।

अन्वयः—सः समग्रसम्पदः पितुः प्रयत्नाद् शुभैः शरीरावयवैः हरिदश्वदीधितेः अनुप्रवेशाद् बालचन्द्रमा इव दिने दिने वृद्धिं पुपोष।

वाच्य०—तेन बालचन्द्रमा इव दिने दिने वृद्धिः पुपुषे (कर्म०)।

चन्द्रिका—स=रघुः, समग्रसम्पदः=पूर्णश्रियः, पितुः=जनकस्य, प्रयत्नाद् =परिश्रमात, शुभैः=कान्तैः, शरीरावयवैः=देहप्रतीकैः. हरिदश्वस्य=सूर्यस्य, दीधितेः=मयूखस्य, अनुप्रवेशात्=व्यापनात्, बालचन्द्रमा इव=नूतनोदितसुधांशुः यथा, दिने दिने=प्रतिदिवसम्, वृद्धिम्=उपचयम्, पुपोष=समेधयामास।

सञ्जीविनीः—पितुरिति। स रघुः समग्रसम्पदः पूर्णलक्ष्मीकस्य पितुर्दिलीपस्य प्रयत्नाच्छुभैर्मनोहरैः शरीरावयवैः। हरिदश्वदीधितेः सूर्यस्य रश्मेः। 'भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः' इत्यमरः। अनुप्रवेशाद् बालचन्द्रमा इव दिने दिने प्रतिदिनम्। 'नित्यवीप्सयोः' इति द्विर्वचनम्। वृद्धिं पुपपोष। अत्र वराहसंहितावचनम्—'सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम्। क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः॥' इति।

समासः—समग्रा सम्पद् यस्य सः (बहु०) समग्रसम्पद्, तस्य समग्रसम्पदः शरीरस्य अवयवाः शरीरावयवाः, तैः शरीरावयवैः। हरितः अश्वाः यस्य स

हरिदश्वः (बहु०) हरिदश्वस्य दीधितः हरिदश्वदीधितिः, तस्य हरिदश्वदीधितेः। बालश्चासौ चन्द्रमाश्च बालचन्द्रमाः (कर्म०)।

कोशः—'समग्रमखिलं पूर्णमखण्डं स्यादनूनके' 'सम्पदि। सम्पत्तिः श्रीश्च लक्ष्मीश्च' 'भास्वद्विवस्वत्सप्ताश्वोष्णरश्मयः' 'अङ्गं प्रतीकोऽवयवः' भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्' सुधांशुश्चन्द्रमाः' इति चामराः।

भावार्थः—रघुः पूर्णैश्वर्यस्य पितुः प्रयत्नाद् प्रतिदिनं, बालचन्द्रः (शुक्लस्येन्दुः) यथा स्वस्मिन् सूर्यकिरणप्रवेशात् वर्धमानो भवति भवति, तथैव सुन्दराङ्गं पुष्टिं प्राप।

हिन्दीश्लोकार्थः—वह शिशु रघु पूर्णसम्पत्तिशाली पिता दिलीप के प्रयत्न सुन्दर अंग-प्रत्यंगों से, सूर्य की किरण प्रवेश करने से बालचन्द्र (शुक्लप्रतिपद) की भाँति प्रतिदिन वृद्धि प्राप्त करने लगा ॥ २२ ॥

उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरन्दरौ ।
तथा नृपः सा च सुतेन मागधी ननन्दवस्तत्सदृशेन तत्समौ ॥२३॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके रघुजन्मना सुदाक्षिणादिलीपयोः प्रसादाधिक्य वर्णितमस्ति।

अन्वय—उमावृषाङ्कौ शरजन्मना यथा 'ननन्दतुः' शचीपुरन्दरौ जयन्तेन यथा 'ननन्दतुः' तथा तत्समौ सा मागधी नृपश्च तत्सदृशेन सुतेन ननन्दतुः।

वाच्य०—उमावृषाङ्काभ्यां शरजन्मना यथा, शचीपुरन्दराभ्यां जयन्तेन यथा 'ननन्दे' तथा तत्समानाभ्यां मागध्या नृपेण च तत्सदृशेन सुतेन 'ननन्दे' (भाव०)।

चन्द्रिका—उमावृषाङ्कौ=शिवाभवौ, शरजन्मना=षडाननेन, यथा=येन प्रकारेण, ननन्दतुः=मुमुदाते, इत्येका उपमा, अन्या च पुनः—शचीपुरन्दरौ=इन्द्राणीशक्रौ, जयन्तेन=जयन्तनाम्ना पुत्रेण, यथा ननन्दतुः=मुमुदतुः, तथा=तेन प्रकारेण, तत्समौ=गौरीरुद्र-शचीपुरन्दरसदृशौ, सा मागधी=सुदक्षिणा, नृपः=पार्थिवः (च अपि) तत्सदृशेन=कुमारजयन्ताभ्यां समासेन, सुतेन=पुत्रेण, ननन्दतुः=मुमुदतुः। उपमालंकारः। ... उमावृषाङ्क-शचीपुरन्दरसादृश्य मागधीदिलीपयोः

कुमारजन्तसादृश्यं च रघौ, यथेति उपमावाचकः । उभयत्र साधारणधर्मस्य उपमानोपमेयगतस्यानुपादानात् न्यूनोपमेति मन्तव्यम् ।

सञ्जीविनी:—उमेति । उमावृषाङ्कौ पार्वतीवृषभध्वजौ शरजन्मना कार्तिकेयेन 'कार्तिकेयो महासेनः शरजन्मा षडाननः' इत्यमरः । यथा ननन्दतुः । शचीपुरन्दरौ जयन्तेन जयन्ताख्येन सुतेन । 'जयन्तः पाकशासनिः' इत्यमरः । यथा ननन्दतुः । तथा तत्समौ ताभ्यामुमावृषाङ्काभ्यां शचीपुरन्दराभ्यां च समौ समानौ सा मागधी नृपश्च तत्सदृशेन ताभ्यां कुमारजयन्ताभ्यां सदृशेन सुतेन ननन्दतुः । मागधी प्रागव्याख्याता ।

समासः—वृषोऽङ्को यस्य सः वृषाङ्कः (बहु०) । उमा च वृषाङ्कश्च उमावृषाङ्कौ (द्वन्द्व०) । शरेभ्यो जन्म यस्य सः (व्यधिकरणबहु०) शरजन्मा । शची च पुरन्दरश्च शचीपुरन्दरौ (द्वन्द्व०) ताभ्यां सदृशः तत्सदृशः ( तृती० त० ) तेन तत्सदृशेन । तौ च तौ च ( उमावृषाङ्कौ शचीपुरन्दरौ च ) ते (सरूपैकशेषः), तैः समौ तत्समौ ।

कोश:—'उमा कात्यायनी गौरी काली हैमवतीश्वरी' 'शरजन्मा षडाननः' 'पुलोमजा शचीन्द्राणी' 'पुरुहूतः पुरन्दरः' 'जयन्तः पाकशासनिः' 'वा यथा तथैवैवं साम्ये' 'वाच्यलिङ्गा समस्तुल्यः सदृशः सदृशः सदृक्' इति सर्वत्रामराः ।

भावार्थः—पार्वतीशिवौ यदा कुमारो जातः तदा यथा जहृषतुः, यथा च जयन्तजनने शचीशक्रौ आनन्दमन्वभवताम्, तथैव दम्पतीद्वयसमानौ इमौ दम्पती अपि कुमारजयन्तसदृशेन रघुणा मुमुदतुरिति भावः ।

हिन्दीश्लोकार्थः—पार्वती और परमेश्वर षडानन से तथा इन्द्राणी और इन्द्र जयन्त से जैसा आनन्द पाये, उसी प्रकार उन दो दम्पतियों के सदृश सुदक्षिणा और दिलीप कार्तिकेय जयन्त के समान अपने पुत्र रघु से आनन्द पाये ।। २३ ।।

रथाङ्गनाम्नोरिव भावबन्धनं बभूव यत्प्रेम परस्पराश्रयम् ।
विभक्तमप्येकसुतेन तत्तयोः परस्परस्योपरि पर्यचीयत ।।२४।।

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंश-महाकाव्ये तृतीयसर्गे विद्यमानेऽस्मिन् श्लोके रघोरुत्पत्तौ दम्पत्योर्दिलीपस्य प्रेमविवर्धनं वर्णितमस्ति ।

अन्वयः—रथाङ्गनाम्नोः इव तयोः भावबन्धनं परस्पराश्रयं यत् प्रेम बभूव तद् एकसुतेन विभक्तम् अपि परस्परस्य उपरि पर्यचीयत ।

वाच्य०ः—भावबन्धनेन परस्पराश्रयेण येन प्रेम्णा बभूवे तेन पर्यचीयत । ( भाव० )

चन्द्रिकाः—रथाङ्गनाम्नोः इव=चक्रवाकयोरिव, तयोः=सुदक्षिणा दिलीपयोः, भावः अभिप्रायः बध्यते अनेन ( प्रेम्णा ) इति भावबन्धनम् द्वयोः सर्वत्र एकाभिप्रायतासम्पादकम्, परस्पराश्रयं=अन्योन्यालम्बनकम्, दिलीपप्रेम्ण आलम्बनं सुदक्षिणा, एवं सुदक्षिणाप्रेम्ण आलम्बनं दिलीप इति यावत् । यत् प्रेम=यः प्रणयः, बभूव=आसीत्, तत्=प्रेम, एकसुतेन=केवलपुत्रेण, विभक्तमपि =दत्तांशमपि, अपिर्विरोधे, पुत्रेण विभागे कृते प्रेम्णः न न्यूनता संवृत्ता, अपितु वृद्धिर्जातेति भावः, परस्परस्य=अन्योन्यस्य, उपरि=उपरिष्टात्, विषये इत्यर्थः । पर्यचीयत्=प्रवृद्धम् ।

सञ्जीविनीः— रथाङ्गेति । रथाङ्गनाम्नी च रथाङ्गनामा च रथाङ्गनामानौ चक्रवाकौ । 'पुमान्स्त्रिया' इत्येकशेषः । तयोरिव तयोर्दम्पत्योर्भावबन्धनं हृदयाकर्षकं परस्पराश्रयमन्योन्यविषयं यत्प्रेम बभूव तदेकेन केवलेन ताभ्यामन्येन वा । 'एके मुख्यान्यकेवलाः' इत्यमरः । सुतेन विभक्तमपि कृतविभागमपि परस्परस्योपरि पर्यचीयत ववृधे । कर्मकर्तरि लङ् । अकृत्रिमत्वात्स्वयमेवोपचितमित्यर्थः । यदेकाधारं वस्तु तदाधारद्वये विभज्यमानं ह्रीयते । अत्र तु तयोः प्रागेककर्तृकमेकैकविषयं प्रेम सम्प्रति द्वितीयविषयलाभेऽपि नाह्रीयत । प्रत्युतोपचितमेवाभूदिति भावः ।

समासः—रथस्य अङ्गं ( चक्रम् ) रथाङ्गम्, रथाङ्गस्य नाम ययोस्तौ (बहु०) रथाङ्गनामानौ । (रथाङ्गनाम्नी च रथाङ्गनामा चेति 'पुमान् स्त्रिया' इत्येकशेषः, 'अन उपधालोपि०' इत्यादिना ङीपो वैकल्पिकतया रथाङ्गनामा च रथाङ्ग-नामा च' स्त्रीपुंसयोरपि समानं रूपं वा ।) तयोः रथाङ्गनाम्नोः । भावः बध्यते अनेनेति भावबन्धनम् । परस्परम् आश्रयो यस्य तत् परस्रापाश्रयम् (बहु०) । एकश्चासौ सुतश्च एकसुतः ( कर्म० ) तेन एकसुतेन ।

कोशः—'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ।' 'भावः सत्तास्वभावा-

भिप्रायचेष्टात्मजन्मसु ।' 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः' श्लेषे विषयाश्रये' 'एके मुख्यान्यकेवलाः' इति चामरः ।

भावार्थः—चक्रवाकदम्पत्योरिव सुदक्षिणादिलीपयोः परस्परं यद् गाढं प्रेम आसीत् तत् रघुणा पुत्रेण कृतेऽपि विभागे (रघुणा मातापित्रोः प्रेमविभागं कृत्वा स्वयं स्वांशग्रहणेऽपि) क्षीणं नाभवत्, किन्तु प्रावर्द्धतैवेति भावः ।

हिन्दीश्लोकार्थः—चकवी-चकवाओं में जैसा गाढ़ प्रेम होता है वैसा ही प्रगाढ़ सुदक्षिणा दिलीपों का, एकाभिप्राय बनाने वाला अन्योन्य जो प्रेम था, वह एक पुत्र रघु के द्वारा बट जाने पर भी परस्पर एक दूसरे के ऊपर बढ़ता (ही) गया बटने से बटा नहीं ॥ २४ ॥

उवाच धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चांगुलिम् ।
अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः ॥२५॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंश-महाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके शिशोः रघोः गमनप्रणामादिभिः दिलीपस्य हर्षातिरेकः प्रस्तुतोऽस्ति ।

अन्वयः—सः अर्भकः धात्र्या प्रथमोदितं वचः उवाच, तदीयाम् अंगुलिम् अवलम्ब्य ययौ च । प्रणिपातशिक्षया नम्र अभूत् च, तेन पितुः मुदं ततान ।

वाच्य०—तेनार्भकेण वच ऊचे (कर्म०)। तेनांगुलिमवलम्ब्य च यये (भाववा०) नम्रेणाभावि (भाववा०)। तेन मुत् तेने (कर्मवा)।

चन्द्रिका—सः=अर्भकः रघु, धात्र्या=उपमात्रा, प्रथमोदितं=इदं प्रथमतया उपदिष्टम्, वचः=वचनम्, उवाच=जगाद । धात्री सर्वप्रथमं शिशुम् उपदिशति स्म—'पितः! ते नमः अस्तु' इत्यादि, रघुरपि. तदनूक्तवानित्यर्थः । तदीयां=धात्रीसम्बन्धिनीम, अगुलिं=करशाखाम्, अवलम्ब्य=गृहीत्वा, ययौ च=जगामापि । प्रणिपातशिक्षया=प्रणामकरणस्य बोधने, नम्रः=सुग्नतः, अभूत्=संवृत्तः, च=समुच्चायकः, तेन=धात्रीप्रथमोदितवचः कथनेन तदंगुलिमवलाम्ब्य=चलनेन तथा प्रणामार्थं, तन्नमन्तं च, पितुः=दिलीपस्य, मुदम्=आनन्दम्, ततान=वर्धयामास ।



सञ्जीविनी—उवाचेति । सोऽर्भकः शिशुः । 'पोतः पाकोऽर्भको डिम्भः

पृथकः शावकः शिशुः' इत्यमरः। धात्र्योपमात्रा। 'धात्री जनन्यामलकीवसुमत्युपमातृषु इति विश्वः। प्रथममुदितमुपदिष्टं वच उवाच। तदीयामङ्गुलिमवलम्ब्य ययौ च प्रणिपातस्य शिक्षयोपदेशेन नम्रोऽभूत् च। इति यत्तेन पितुर्मुदं ततान।

समासः—प्रथमम् उदितं प्रथमोदिम्, तत् प्रथमोदितम्। यस्य इयं तदीया तां तदीयाम्। प्रणिपातस्य शिक्षा प्रणिपातशिक्षा (ष.त.), तया प्रणिपातशिक्षया।

कोशः—'पोतः पाकोऽसको डिम्भः' 'धात्री स्यात्उपमातापि क्षितिरप्यामलक्यपि।' 'भाषितं वचनं वचः' 'उक्तं भाषितमुदिम्' 'अंगुल्यः करशाखा स्युः' 'मुत्प्रीतिः प्रमदो हर्षः' इति चामराः।

भावार्थः—धात्रीवचनं तथैव मुग्धतया अनुवदन् तदंगुलिं गृहीत्वा स्खलत्पदं चलन् तथा प्रणामप्रकारस्य बोधवे स्वयमपि सन्नतः प्रणाममभिनयन् शिशुः रघुः स्वमनोहारिचेष्टया दिलीपस्य हर्षं प्रवर्धितवान् इति भावः।

हिन्दी०—वह बालक रघु दाई से पहले कहे हुए 'तात! माता' इत्यादि वचनों का उच्चारण किया और दाई की उंगली के सहारे से (ठुमक-ठुमक कर) चलने लगा तथा प्रणाम करने को सिखाने पर नम्र होने लगा, इससे पिता का आनन्द बढ़ने लगा ॥२५॥

तमङ्कमारोप्य शरीरयोगजैः सुखैर्निषिञ्चन्तमिवामृतं त्वचि।
उपान्तसंमीलितलोचनो नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ ॥२६॥

सन्दर्भः—द्रष्टव्यः श्लोक १५।

प्रसङ्ग—अत्र रघोरङ्कारोहे दिलीपस्य सुखानुभूतिः वर्णितास्ति।

अन्वयः—शरीरयोगजैः सुखैः त्वचि अमृतं निषिञ्चन्तम् इव तम् अङ्कम् आरोप्य उपान्तसम्मीलितलोचनेन 'सन्' नृपः चिरात् सुतस्पर्शरसज्ञतां ययौ।

वाच्य०—उपान्तसम्मीलितलोचनेन नृपेण चिरात् रसज्ञता ययेः (कर्मवा०)

चन्द्रिका—शरीरयोगात्=देहसम्पर्कात्, जातैः (जैः)=उत्पन्नं, सुखैः=आनन्दैः, त्वचि=त्वगिन्द्रिये, अमृतं=सुधाम्, निषिञ्चन्तमिव=स्रवन्तमिव, तं=रघुम, अङ्कं=उत्सङ्गम्, आरोप्य=आरोह्य, उत्सङ्गे=समुपवेश्येत्यर्थः, उपा-

न्तयोः=अञ्चलयोः, सम्मीलिते=निमेषिते, लोचने=नेत्रे येन तादृशः 'सन् भवन्' नृपः=राजा दिलीपः, चिरात्=चिराय, चिरकालान्तरमिति यावत्, सुतस्पर्शस्य =पुत्रस्पर्शस्य, रसज्ञतां=स्वादवेत्तृत्वम्, ययौ=जगाम। आनन्दजाड्यात् न किमप्यजानात् चिरम् इति भावः।

सञ्जीविनी— तमिति। शरीरयोगजैः सुखैस्त्वचि त्वगिन्द्रियेऽमृतं निषिञ्चन्तं वर्षन्तमिव तं पुत्रमङ्कमारोप्य मुदाविर्भावादुपान्तयोः प्रान्तयोः सम्मीलितलोचनः सन् नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ। रस स्वादः।

समासः—शरीरस्य योगः शरीरयोगः, शरीरयोगाद् जातानि शरीरयोगजानि, तैः शरीरयोगजैः। उपान्तयोः सम्मीलिते उपान्तसम्मीलिते (ष.त.) उपान्तसम्मीलिते लोचने यस्य सः उपान्तसम्मीलितलोचनः (बहु०)। सुतस्य स्पर्शः सुतस्पर्शः, सुतस्पर्शस्य रसः, सुतस्पर्शरसं जानातीत सुतस्पर्शरसज्ञः, सुतस्पर्शरसज्ञस्य भावः सुतस्पर्शरसज्ञता, तां सुतस्पर्शरसज्ञाताम्।

कोशः—'उत्सङ्गचिह्नयोरङ्कः' 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' 'शर्मशातसुखानि च' 'पीयूषममृतं सुधा' 'सारो सज्जा नरि त्वक् स्त्री' 'लोचनं नेत्रमीक्षणं चक्षुरक्षिणी' 'नृपभूपमहाक्षितः' इत्यमराः।

भावार्थः—दिलीपः सुतं रघुमङ्के उपवेश्य तदङ्गस्पर्शानन्दजडः आनन्दातिशयात् अर्धनिमीलितलोचनः चिराय किमपि न ज्ञातवान्, चिरकालानन्तरं पुत्रस्पर्शसुखमन्वभूत् इति भावः। यद्वा चिरकालात् प्रार्थितं पुत्राङ्गस्पर्शसुखमनुभूतवान्।

हिन्दीश्लोकार्थः—अंग संग से त्वचा में मानों अमृत बरसाने वाले उस पुत्र रघु को गोद में बैठाकर (आनन्दातिशय के कारण) नेत्रप्रान्तों को मूँदे हुए राजा दिलीप ने चिरकाङ्क्षित पुत्रस्पर्श के स्वाद को जाना, (अथवा आँख मूँदे राजा को पुत्रस्पर्श सुख का स्वाद बहुत देर के बाद ज्ञात होने लगा। उसके पहले तो आनन्द से जड़ता आ गई थी) ॥२६॥

अमंस्त चानेन परार्ध्यजन्मना स्थितेरभेत्ता स्थितिमन्तमन्वयम्।
स्वमूर्तिभेदेन गुणाग्र्यवर्तिना पतिः प्रजानामिव सर्गमात्मनः ॥२७॥

प्रसङ्गः—रघुवंशमहाकाव्ये तृतीयसर्गे विद्यमानेऽस्मिन् श्लोके स्वानुरूप-पुत्रजन्मतः दिलीपस्य वंशस्थैर्यं वर्णितमस्ति ।

अन्वयः—स्थितेः अभेत्ता सः पराध्यंजन्मना अनेन अन्वयं प्रजानां पतिः गुणाग्र्यवर्तिना स्वमूर्तिभेदेन आत्मनः सर्गमिव स्थितिमन्तम् अमंस्त च ।

वाच्य०—स्थितेरभेत्रा पराध्यंजन्मना अनेनान्वयः प्रजानां पत्या गुणाग्र्य-वर्त्तिना स्वमूर्तिभेदेन आत्मनः सर्ग इव स्थितमान् अमानि (कर्म०) ।

चन्द्रिका—स्थितेः=मर्यादायाः, अभेत्ता=अभञ्जकः, स=दिलीपः, परा-र्ध्यजन्मना=श्रेष्ठजनुषा, अनेन=रघुणा, अन्वयं=वंशम्, प्रजानां = जनानां, पतिः=ईश, प्रजापतिः=ब्रह्मा, गुणाग्र्यण=सत्त्वरजस्तमोगुणेषु मुख्येन, सत्त्वेन वर्तते इति तेन गुणाग्र्यवर्त्तिना=गुणश्रेष्ठसत्त्वगुणप्रधानेन, स्वमूर्तिभेदेन = स्वावतारान्तरेण विष्णुना=विष्णुर्हि सत्त्वप्रधानो देवः, आत्मनः=स्वस्य (ब्रह्मण:), सर्ग=सृष्टिम्, स्थितिमन्तम्=स्थायिनम्, अमंस्त=अज्ञासीत् । अत्र दिलीपब्रह्मण ो-रुपमानोपमेयभावः, एवमेव रघुविष्ण्वोरपि वंशसर्गयोरपि उपमानोपमेयभावः । पर्यादापालकत्वं दिलीपब्रह्मणोः समानम् । उत्कृष्टजन्मत्व=गुणाग्र्यवर्तित्व-स्व-मूर्तिभेदत्वानि रघुविष्ण्वोः सादृश्यम् । तत्र रघुपक्षे गुणाग्र्यण=विद्याविनयौदा-र्यादिना, स्वमूर्तिः-ब्रह्मपक्षे=विष्णुः, दिलीपपक्ष=रघुः, यथा ब्रह्मा, सत्त्वप्रधान-विष्णुना स्वसर्गं प्रतिष्ठावन्तममन्यत तथैव दिलीपः स्ववंशं विनयादिगुणप्रधानेन रघुणा प्रतिष्ठावन्तं मन्यते स्मेत्यर्थः ।

सञ्जीविनी—अमंस्तेति । स्थितेरभेत्ता मर्यादापालकः स नृपः पराध्यं-जन्मनोत्कृष्टजन्मनाऽनेन रघुणाऽन्वयं वंशम् । प्रजानां पतिर्ब्रह्मा । गुणाः सत्त्वा-दयः । तेष्वग्र्यण मुख्येन सत्त्वेन वर्तते व्याप्रियत इति गुणाग्र्यवर्ती तेन । स्वस्य मूर्त्तिभेदेनावतारविशेषेण विष्णुनाऽऽत्मनः सर्गं सृष्टिमिव । स्थितिमन्तं प्रतिष्ठा-वन्तममंस्त मन्यते स्म । मन्यतेरनुदात्तत्वादिट्प्रतिषेधः । अत्रोपमानोपमेययो-रितरेतरविशेषणानीतरेतरत्र योज्यानि । तत्र रघुपक्षे गुणा विद्याविनयादयः । 'गुणोऽप्रधाने रूपादौ मौर्व्यां सूदे वृकोदरे । स्तम्बे सत्त्वादिसन्ध्यादिविद्याऽऽदि-हरितादिषु ॥' इति विश्वः । शेषं सुगमम् ।



समासः—पराध्यं जन्म यस्य सः पराध्यंजन्मा ( बहु० ), तेन पराध्यं-

जन्मना। न भेत्ता अभेत्ता (नञ् तत्पु०)। स्वस्य मूर्ति स्वमूर्तिः, स्वमूर्तेः भेदः स्वमूर्तिभेदः, तेन स्वमूर्त्तिभेदेन। गुणेष्वग्रयः गुणाग्रयः गुणाग्र्येण वर्तते इति गुणाग्र्यवर्ती, तेन गुणाग्र्यवर्तिना। स्थितिः अस्यास्तीति स्थितिमान् तं स्थितिमन्तम्।

कोशः—'मर्यादा धारणा स्थितिः' 'पराध्र्याग्रप्रधप्राग्रहरप्राग्रयाग्रयोयमग्रीयम्' 'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ।' 'मौर्व्यां द्रव्याश्रिते सत्त्वशौर्यसन्ध्यादिके गुणः।' 'मूर्तिस्तनुस्तनूः' 'सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु' इत्यमराः।

भावार्थः—ब्रह्मा यथा निजसृष्टिं श्रेष्ठप्राकट्येन सत्त्वगुणमुख्येन स्वावतारविशेषेण विष्णुना स्थितिमतीं मन्यते स्म तथा दिलीपोऽपि निजवंशं श्रेष्ठजन्मना विनयादिगुणप्रधानेन स्वदेहान्तरेण रघुणा स्थायिनं ज्ञातवान्। 'अनेन रघुणा मम वंशः स्थिरो जातः इत्यज्ञासीत्।

हिन्दीश्लोकार्थः—मर्यादापालक राजा दिलीप ने अपने वंश को उत्कृष्ट जन्म वाले इस रघु से (जो कि विनयादि गुण युक्त है तथा अपना ही दूसरा देह है), वैसे प्रतिष्ठायुक्त (स्थिर) माना, जैसे ब्रह्माजी ने अपनी सृष्टि को—उत्कृष्ट हैं जिनका आविर्भाव, और जो सत्त्वगुणप्रधान हैं तथा अपने ही अवतारविशेष भूत विष्णु भगवान् से स्थिर माना था ॥२७॥

स वृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः।
लिपेर्यथावद् ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥ २८ ॥

प्रसङ्गः—रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके रघोः वयस्यैः सहाक्षराभ्यासः वर्णितोऽस्ति।

अन्वयः—वृत्तचूलः 'सन्' सः चलकाकपक्षकैः सवयोभिः अमात्यपुत्रैः अन्वितः 'सन्' लिपेः यथावद् ग्रहणेन वाङ्मयं नदीमुखेन समुद्रम् इव आविशत्।

वाच्य०—वृत्तचूलेन अमात्यपुत्रैः अन्वितेन तेन वाङ्मयं समुद्र इवाविश्यत (कर्म०)।



चन्द्रिका—वृत्तचूलः=जातचूडासंस्कारः, 'सन् भवन्', सः=रघुः, चल-

काकपक्षकै:=लोलशिखण्डकः, इतस्तत=उड्डीयमानालकैरित्यर्थः। सवयोभि=समानवयस्कै:, अमात्यपुत्रैः=मन्त्रिसुतैः, अन्वितः=युक्तः 'सन्' लिपेः=वर्णमालायाः, यथावद् सम्यक्तया, ग्रहणेन=ज्ञानेन वाङ्मयं=शब्दप्रपञ्चम्, सर्वाणि शास्त्राणीत्यर्थः, नदीमुखेन=आपगाद्वारेण समुद्रम्=सागरम्, इव आविशत्=अन्तरगमद्। यथा कोऽपि जलजन्तुः नदीद्वारेण सागरं प्रविशति तथायं लिपिग्रहणेन शब्दप्रपञ्चं प्राविक्षदिति भावः। अस्याक्षरारम्भो जात इत्यर्थः।

सञ्जीविनी—स इति 'चूडा कार्या द्विजातीनां सर्वेषामेव धर्मतः। प्रथमेऽब्दे तृतीये वा कर्त्तव्या श्रुतिचोदनात्।' इति मनुस्मरणात्तृतीये वर्षे वृत्तचूलो निष्पन्नचूडाकर्मा सन्। डलयोरभेदः। स रघुः। 'प्राप्ते तु पञ्चमे वर्षे विद्याऽऽरम्भं च कारयेत्' इति वचनात्पञ्चमे वर्षे, चलकाकपक्षकैश्चञ्चलशिखण्डकैः। 'बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डकः।' इति हलायुधः। सवयोभिः स्निग्धैः। 'वयस्य स्निग्धः सवयाः' इत्यमरः। अमात्यपुत्रैरन्वितः सन्। लिपेः पञ्चाशद्वर्णात्मिकाया मातृकाया यथावद्ग्रहणेन सम्यग्बोधेनोपायभूतेन वाङ्मयं शब्दजातम्। नद्या मुखं द्वारम्। 'मुखं तु वदने मुख्यारम्भे द्वाराभ्युपाययोः।' इति यादवः। तेन कश्चिन्मकरादिः समुद्रमिव आविशत्प्रविष्टः। ज्ञातवानित्यर्थः।

समासः—वृत्ता चूला यस्य सः (बहु०) वृत्तचूलः। चलाः काकपक्षकाः येषां ते चलकाकपक्षकाः (बहु०), तैः चलकाकपक्षकैः। समानं वयो येषां ते सवयसः, तैः सवयोभिः (बहु०)। अमात्यानां पुत्राः अमात्यपुत्राः, तैः अमात्यपुत्रैः। वागेव वाङ्मयं, तत् वाङ्मयम्। नद्या मुखं नदीमुखम्, तेन नदीमुखेन।

कोशः—शिखा चूडा केशपाशी' 'काकपक्षः शिखण्डकः' 'चलं लोलं चलाचलम्' 'वयस्थः स्निग्ध सवयाः' 'मन्त्री धीसचिवोऽमात्यः' 'लिपिलिबिरुभे स्त्रियौ' इत्यमराः। 'मुखन्तु वदने मुख्यारम्भे द्वाराभ्युपाययोः' इति यादवः।

भावार्थः—यथा ग्राहादिर्जलजन्तुः नदीमुखेन सागरं प्रविशति तथैव चूडासंस्कारानान्तरं रघुरपि (पञ्चवर्षः) समानवयस्कैः मन्त्रिपुत्रैः सह एकपञ्चाशद्वर्णात्मिकां वर्णमालां सम्यग् ज्ञात्वा वर्णमालामुखेन शब्दप्रपञ्चं महान्तं प्राविशत् इति भावः।

हिन्दीश्लोकार्थः—चूडासंकार सम्पन्न होने पर बालक रघु ने चञ्चल काकुल से युक्त समानवयस्क मन्त्रिपुत्रों के साथ वर्णमाला अच्छी तरह सीखने के बाद उसी वर्णमाला द्वारा वाङ्मय में वैसे ही प्रवेश किया जैसा कि मगर आदि नदी के द्वारा समुद्र में प्रवेश करते हैं ॥ २८ ॥

अथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् ।
अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति ॥२९॥

प्रसङ्गः- महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीयसर्गे विद्यमानेऽस्मिन् श्लोके यज्ञोपवीतानन्तरं रघोः सफलशास्त्राभ्यासः वर्णितोऽस्ति ।

अन्वयः—अथ विधिवद् उपनीतं गुरुप्रियम् एनं विपश्चितः गुरवः विनिन्युः । ते अत्र अवन्ध्ययत्नाश्च बभूवुः । हि क्रिया वस्तूपहिता प्रसीदति ।

वाच्य०—उपनीतो गुरुप्रिय एष विपश्चिद्भिः गुरुभिः विनिन्ये । (कर्म०) तैरत्रावन्ध्ययत्नैश्च बभूवे (भाववा०) क्रियया वस्तूपहितया प्रसद्यते (भाव०)

चन्द्रिका—अथ=गर्भादिकादशे वर्षे, विधिवत=यथाशास्त्रम्, उपनीतं=कृतब्रह्मोपदेशसंस्कारम् गुरुप्रियं=आचार्यस्नेहास्पदम्, एनं=रघुं, विपश्चितः=तत्त्वोपदेशकाः, 'गृणाति तत्त्वमिति गुरुः' विनिन्युः शिक्षयामासुः । ते=गुरवः, अत्र=रघुशिक्षणे, अवन्ध्ययत्नाः=सफलश्रमाः, बभूवुः=संवृत्ताः । हि=यतः, क्रिया =शिक्षणकर्म, वस्तूनि पात्रे=योग्ये, उपहिता=निहिता, प्रसीदति=सफला भवति । पात्रभूते छात्रे विद्योपदेशः फलिनो भवतीति भावः ।

सञ्जीविनीः—अथेति । 'गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भाच्च द्वादशे विशः ।' इति मनुस्मरणादथ गर्भैकादशेऽब्दे विधिवदुपनीतं गुरुप्रियमेनं रघुं विपश्चितो विद्वांसो गुरवो विनिन्युः शिक्षितवन्त । ते गुरवोऽत्रास्मिन् रघाववन्ध्ययत्नाश्च बभूवुः । तथाहि । क्रिया शिक्षा । क्रिया तु निष्कृतौ शिक्षा चिकित्सोपायकर्मसु' इति यादवः । वस्तुनि पात्रभूते उपहिता प्रयुक्ता प्रसीदति फलति । 'क्रिया हि द्रव्यं विनयति नाद्रव्यम्' इति कौटिल्यः ।

समासः—गुरुणा प्रियः गुरुप्रियः, तं गुरुप्रियम् । न वन्ध्यः अवन्ध्यः, अवन्ध्यः यत्नः येषां ते (बहु०) अवन्ध्ययत्नाः । वस्तुनि उपहिता वस्तूपहिता ।

कोशः—'मङ्गलानन्तरारम्भ—' 'विधिर्विधाने दैवेऽपि' गुरू गीष्पतिपित्राद्यौ' "विद्वान् विपश्चिद् दोषज्ञः सन् सुधीः कोविदो बुधः' 'वन्ध्योऽफलोऽवकेशी च' इत्यमराः । 'क्रिया तु निष्कृतौ शिक्षा' इति यादवः ।

भावार्थः - एकादशहायने यथाविधानम् उपनयनसंस्कारसंस्कृतं रघुं वेदशास्त्राध्ययनाय प्राप्ताधिकारत्वात् समुपेतं गुरवः पाठयामासुः । विद्वांसो गुरवः रघुविषये सफला जाताः । उचितनैवैतत् पात्रे (योग्ये) निहिता शिक्षा तेजस्विनी भवति ।

हिन्दोश्लोकार्थः—अनन्तर ग्यारहवे वर्ष में शास्त्रानुसार उपनयन संस्कार सम्पन्न होने के बाद गुरुओं के प्रिय इस रघु को विद्वान् गुरुओं ने शिक्षा दी । वे लोग इस रघु के विषय में सफलश्रम वाले हुए । क्योंकि विद्या सत्पात्र में दी हुई फलवती होती है ॥ २९ ॥

धियः समग्रैः स गुणैरुदारधीः क्रमाच्चतस्रश्चतुरर्णवोपमाः ।
ततार विद्याः पवनातिपातिभिर्दिशो हरिद्भिर्हरितामिवेश्वरः ॥३०॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीयसर्गे विद्यमानेऽस्मिन् श्लोके रघोरान्विक्यादि शिक्षाग्रहणस्य वर्णनमस्ति ।

अन्वयः—उदारधीः सः समग्रैः धियः गुणैः चतुरर्णवोपमाः चतस्रः विद्याः हरिताम् ईश्वरः पवनातिपातिभिः हरिद्भिः 'चतस्रः' दिश इव क्रमात् ततार ।

वाच्य०—उदारधिया तेन हरिताम् ईश्वरेण चतस्रः दिश इव विद्याः क्रमोत्तेरिरे (कर्म०) ।

चन्द्रिका—उदारा = महती, धीः=बुद्धिः, यस्य सः 'उदारो दातृमहतोः' इत्यमरः । सः=रघुः, समग्रैः=सम्पूर्णैः, धियः=मतेः, गुणैः=शुश्रूषा-श्रवण-ग्रहण-धारण-ऊहापोह-अर्थविज्ञान-तत्त्वज्ञानरूपैः धर्मैः, चतुरर्णवाः=चतुःसमुद्राः, उपमा =सादृश्यम्, यासां ताः चतुरर्णवोपमाः । दुरवगाहत्वापारत्वादिना चतुस्सागरसदृशीः । चतस्रः न्यायशास्त्र-श्रुति-वार्ता-दण्डनीतिरूपाः चतुस्संख्यकाः, विद्याः =शिक्षाः, हरितां=दिशाम्, ईश्वरः=ईशः, सूर्यः=अधिपतिरिति यावत् । पवनातिपातिभिः समीरमपि अतिक्रम्य=धावद्भिः तथाविधैरित्यर्थः । हरिद्भिः =अश्वैः, 'चतस्रः' दिशः इव= ककुभो यथा, क्रमात्=क्रमेण, "शनैर्विद्या शनैः

यन्था शनैः पर्वतलङ्घनम्" इत्यादिना=विद्याविषये त्वारित=त्याज्यम् इत्युक्तम्, अतः=क्रमेण, ततार=पारं गतवान्, अधीतवानिति यावत्। सूर्यो यथा वेगशालिभिः घोटकैः चतुर्दिशः अतिक्रामति तथा एष रघुः विद्याः साकल्येन गृहीतवान्। उपमालङ्कारः।

सञ्जीविनी—धिय इति। अत्र कामन्दकः 'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा। ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः' इति। 'आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती। एता विद्याश्चतस्रस्तु लोकसंस्थितिहेतवः॥' इति च उदारधीरुत्कृष्टबुद्धिः। स रघुः समग्रैर्धियो गुणैः। चत्वारोऽर्णवा उपमा यासां ताश्चतुरर्णवोपमाः। 'तद्धितार्थोत्तरपदसमाहारे च' इत्युत्तरपदसमासः। चतस्रो विद्याः। हरिता दिशामीश्वरः सूर्यः पवनातिपातिभिर्हरिद्भिर्निजाश्वैः। 'हरित्ककुभि वर्णे च तृणवाजिविशेषयोः' इति विश्वः। चतस्रो दिश इव क्रमात्ततार। चतुरर्णवोपमत्वं दिशामपि द्रष्टव्यम्।

समासः—उदारा धीः यस्य सः ( बहु० ) उदारधीः। चत्वारः अर्णवा उपमा यासां ताः ( बहु० ) चतुरर्णवोपमाः, ताः पुनस्तद्वत्। पवनम् अतिलंध्य पतितुं शीलं येषां ते पवनातिपातिनः, तैः पवनातिपातिभिः (बहुः)।

कोशः—'उदारो दातृमहतोः' 'धीः प्रज्ञा शेमुषी मतिः' 'समग्रं सकलं पूर्णम्' 'मौर्व्या द्रव्याश्रिते सत्त्वशौर्यसन्ध्यादिके गुणः' 'उपमोपमानं स्यात्' दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' 'ईश्वरः पतिरीशिता' इत्यमराः। 'हरित्ककुभि वर्णे च तृणवाजिविशेषयोः' इति विश्वः।

भावार्थः—महाबुद्धिशाली रघुः शुश्रूषादिभिः पूर्णैः बुद्धिगुणैः अपराः दुर्ग्रहाः आन्वीक्षिक्यादीः चतुस्समुद्रतुल्याः चतुःसंख्यका विद्याः, तीव्रवेगशालिभिः अश्वविशेषैः सूर्यश्चतुर्दिशः इव समुत्तीर्णवानिति भावः।

हिन्दीश्लोकार्थ—विपुलमति रघु ने सम्पूर्ण बुद्धि के गुणों (शुश्रूषा-श्रवणादि) से चारों समुद्र के सदृश चार ( आन्वीक्षिकी तर्कशास्त्र ) वेद, वार्ता, (दण्डनीति) विद्याओं को, दिशाओं के स्वामी सूर्य वायु से भी अधिक वेगशाली अपने घोड़ों से जैसे चारों दिशाओं को क्रम से पार करते हैं उसी भाँति क्रम से पार किया ॥३०॥

त्वचं स मेध्यां परिधाय रौरवीमशिक्षतास्त्रं पितुरेव मन्त्रवत् ।
न केवलं तद्गुरुरेकपार्थिवः क्षितावभूदेकधनुर्धरोऽपि सः ॥ ३१ ॥

प्रसङ्गः—रघुवंशमहाकाव्ये तृतीयसर्गे विद्यमानेऽस्मिन् श्लोके कृष्णाजिनं धारयित्वा रघुणा पितुः सकाशाद् कृतः शस्त्राभ्यासः वर्णितोऽस्ति ।

अन्वयः—सः मेध्यां रौरवीं त्वच परिधाय मन्त्रवत् अस्त्रं पितुः एव अशिक्षत । तद्गुरुः एकपार्थिवः केवलं न अभूत्, (किन्तु) क्षितौ सः एकधनुर्धरः अपि (अभूत्) ।

वाच्य०—तेन अस्त्रम् अशिक्ष्यत (कर्म०) । तद्गुरुणा एकपार्थिवेन केवलं नाभावि, एकधनुर्धरेणाप्यभावि (भाववा०) ।

चन्द्रिका—सः=रघुः, मेध्यां=पवित्राम्, रौरवीं=कृष्णसारमृगसम्बन्धिनीम्, त्वचं=चर्म, परिधाय=आवेष्ट्य, मन्त्रवत्=मन्त्रसहितम्, अस्त्रम्=अनलाद्यस्त्रम्, पितुरेव=जनकाद् दिलीपादेव गुरोः, अशिक्षत=अगृह्णात् । कुतो नान्यत अधीतवान् इत्याह—तद्गुरुः=रघुपिता (दिलीपः), एकपार्थिवः=अद्वितीयः सम्राट्=केवलं पृथिवीपतिः, नाभूत्=नासीत् । 'किन्तु' क्षितौ=भुवि, एकधनुर्धरः=अद्वितीय धनुर्धार्यपि, अभूत्=आसीत् ।

सञ्जीविनी—त्वचमिति । स रघुः । 'कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः । वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥' इति मनुस्मरणान्मेध्यां शुद्धां रौरवीं रुरुसम्बन्धिनीम् । 'रुरुर्महाकृष्णसारः' इति यादवः । त्वचं चर्म परिधाय वसित्वा मन्त्रवत्समन्त्रकमस्त्रमाग्नेयादिकं पितुरेवोपाध्यायादशिक्षताभ्यस्तवान् । 'आख्यातोपयोगे' इत्यपादानसंज्ञा । पितुरेवेत्यवधारणमुपपादयति—नेति । तद्गुरुरेकोऽद्वितीयः पार्थिवः केवलं पृथिवीश्वर एव नाभूत । किन्तु क्षितौ स दिलीप एको धनुर्धरोऽप्यभूत् ।

समासः—रुरोः इयं रौरवी, तां रौरवीम् । मन्त्रः अस्यास्तीति मन्त्रवत्, तत् मन्त्रवत् । एकश्चासौ पार्थिवः एकपार्थिवः (कर्म०) । तस्य गुरुः तद्गुरुः (ष० त०) धनुषः धरः धनुर्धरः, एकश्चासौ धनुर्धरः एकधनुर्धरः ।



कोशः—'पूतं पवित्रं मेध्यञ्च' 'कृष्णसाररुरुन्यङ्कुरंकुशम्बररौहिषाः' 'गुरु

गीष्पतिपित्रादौ' 'एके मुख्यान्यकेवलाः' 'धन्वी धनुष्मान् धानुष्को निषंगस्त्री धनुर्धरः ।' इत्यमराः ।

भावार्थः—रघुः ब्रह्मचारिधारणीयं कृष्णाजिनं परिधाय समन्त्रकमाग्नेय-वारुणाद्यस्त्रं स्वपितुः सकाशादेव गृहीतवान् । तत्पिता अद्वितीयः पार्थिव एव नासीत् अद्वितीयो धनुरागमज्ञोऽप्यभवत्—इति भावः ।

हिन्दीश्लोकार्थः—रघु ने पवित्र कृष्णाजिन पहनकर मन्त्र समेत आग्ने-यदि अस्त्र को अपने पिता से ही सीखा, क्योंकि उनके पिता केवल अद्वितीय राजा ही न थे, अपितु वे भूमण्डल में अकेले (अद्वितीय) धनुर्धर भी थे ॥३१॥

महोक्षतां वत्सतरः स्पृशन्निव द्विपेन्द्रभावं कलभः श्रयन्निव ।
रघुः क्रमाद्यौवनभिन्नशैशवः पुपोष गाम्भीर्यमनोहरं वपुः ॥ ३२ ॥

सन्दर्भः—द्रष्टव्यः श्लोक ३० ।

प्रसङ्गः—अत्र बाल्यकालमतीत्य रघोः युवावस्थायाः वर्णनमस्ति ।

अन्वयः—रघुः क्रमाद् यौवनभिन्नशैशवः 'सन्' महोक्षतां स्पृशन् वत्सतरः इव, द्विपेन्द्रभावं श्रयन् कलभः इव गाम्भीर्यमनोहरं वपु पुपोष ।

वाच्य०—रघुणा यौवनभिन्नशैशवेन 'सता' स्पृशता वत्सतरेणेव श्रयता कलभेनेव गाम्भीर्यमनोहरं वपुः पुपुषे (कर्म०) ।

चन्द्रिका—रघुः=दिलीपसूनुः, क्रमात् = पञ्चमवर्षानन्तरम्, यौवनेन = तारुण्येन, भिन्नं=स्फुटितं, गतमित्यर्थः, शैशवं=बालभावः, यस्यैदृशः 'सन्'= 'भवन्' महोक्षतां=महाबलीवर्दतां, स्पृशन्=प्राप्नुवन्, वत्सतर इव=दम्यः, तर्णको यथा, द्विपेन्द्रभावं=गजश्रेष्ठतां, श्रयन्=आश्रयन्, कलभ इव=करिशावकवत्, गाम्भीर्येण=सुखदुःखादौ अभिन्नरूपेणावस्थानेन, मनोहरं=सुन्दरम्, वपुः = देहम्, पुपोष=वर्धयामास ।

सञ्जीविनी—महोक्षतामिति । रघुः क्रमाद्यौवनेन भिन्नशैशवो निरस्त-शिशुभावः सन् । महानुक्षा महोक्षो महर्षभः 'अचतुरविचतुर' इत्यादिसूत्रेण निपातनादकारान्तत्वम् । तस्य भावस्तत्ता तां स्पृशन्गच्छन्वत्सतरो दम्य इव । 'दम्यवत्सतरौ समौ' इत्यमरः । द्विपेन्द्रभावं महागजत्वं श्रयन्व्रजन्कलभः करिपोत इव । गाम्भीर्येणाचापलेन मनोहरं वपुः पुपोष ।

समासः—यौवनेन भिन्नं शैशवं ( शिशोर्भावः शैशवं ) यस्य सः (बहु०) यौवनभिन्नशैशवः। महांश्चासौ उक्षा च महोक्षः ( कर्म० ) महोक्षस्य भावः महोक्षता, तां महोक्षताम्। द्विपानाम् इन्द्रः द्विपेन्द्रः, द्विपेन्द्रस्य भावः द्विपेन्द्रभावः, तं द्विपेन्द्रभावम्। गम्भीरस्य भावः गाम्भीर्यम्, गाम्भीर्येण मनोहरं गाम्भीर्यमनोहरम् तत पुनरुद्वत्।

कोशः—'तारुण्यं यौवनं समे' 'शिशुत्वं शैशवं बाल्यम्' वृषो महान् महोक्षः स्यात्' 'दम्यवत्सतरौ समौ' 'द्विरदोऽनेकपो द्विपः' कलभः करिशावकः' 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः' इति चामराः।

भावार्थः—वत्सतरो यथा महोक्षो भवति, यथा वा गजपोतो महागजो भवति, तथैव क्रमेण युवा भवन् रघुः गम्भीरभावेन कान्तं शरीरं पुष्णाति स्म।

हिन्दीश्लोकार्थः—रघु क्रम से युवावस्था से बचपन दूर होने पर, बड़े बैल बनने वाले बछड़े की भाँति, महागजत्व को प्राप्त होनेवाले हाथी के बच्चे की भाँति, गम्भीरता से आकर्षक शरीर को पुष्ट करने लगे। ( रघु को बछड़े और गजवत्स की उपमा दी गई। वे दानों बड़े होते समय जैसे सुन्दर अंग-प्रत्यंग पुष्ट करते है वैसे ही बालक रघु युवावस्था प्राप्त करते हुए गम्भीर और पुष्ट होने लगे ) ॥३२॥

अथास्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्तयद् गुरुः।
नरेन्द्रकन्यास्तमवाप्य सत्पतिं तमोनुदं दक्षसुता इवाबभुः ॥३३॥

सन्दर्भ— द्रष्टव्यः श्लोक ३०।

प्रसङ्गः—अत्र केशान्तसंस्कारानन्तरं रघोः विवाहसंस्कारः वर्णितोऽस्ति।

अन्वयः—अथ गुरुः अस्य गोदनविधेः अनन्तरं विवाहदीक्षां निरवर्तयत्। नरेन्द्रकन्याः तं दक्षसुताः तमोनुदम् इव सत्पतिम् अवाप्य आबभुः।

वाच्य०—अथ गुरुणा अस्य विवाहदीक्षा निरवर्त्यत। (कर्म०) नरेन्द्रकन्याभिः दक्षसुताभिरिव आबभे (भाव०)।

चन्द्रिका—अथ=यौवनप्रवेशानन्तरम्, गुरुः=पिता दिलीपः, अस्य=रघोः, गोदानविधेः=‘केशान्त’ नामकसंस्कारस्य, अनन्तरं=पश्चात्, विवाहदीक्षां=पाणिग्रहणसंस्कारं, निरवर्तयत्=अकारयत्। नरेन्द्रकन्याः=राजपुत्र्यः,

तं=रघुम्, दक्षसुताः=अश्विन्यादयः (सप्तविंशतितारा:), तमोनुदं=तिमिरवारकं चन्द्रम्, इव=यथा, सत्पतिं=समीचीनं भर्तारम्, अवाप्य=लब्ध्वा, आबभ्रुः= चकाशिरे।

सञ्जीविनी—अथेति। 'गौर्नाऽऽदित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः। स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि। पुंस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु॥' इति केशवः। गावो लोमानि केशा दीयन्ते खण्ड्यन्तेऽस्मिन्निति व्युत्पत्त्या गोदानं नाम ब्राह्मणादीनां षोडशादिषु वर्षेषु कर्त्तव्यं केशान्ताख्यं कर्मोच्यते। तदुक्तं मनुना—'केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते। राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः॥' इति। अथ गुरुः पिता 'गुरुर्गीष्पतिपित्रादौ' इत्यमरः। अस्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्त्तयत्। कृतवानित्यर्थः। अथ नरेन्द्र कन्यास्त रघुम्। दक्षस्य सुता रोहिण्यादयस्तमोनुदं चन्द्रमिव। 'तमोनुदोऽग्निचन्द्रार्काः' इति विश्वः। सत्पतिमवाप्याबभ्रुः। रघुरपि तमोनुद्। अत्र मनुः—'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्। अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत्॥' इति।

समासः—गावः (केशा) दीयन्ते खण्ड्यन्ते अस्मिन् (संस्कारे) इति गोदान (केशान्त-संस्कारः), गोदानस्य विधिः गोदानविधिः, तस्य गोदानविधेः। विवाहस्य दीक्षा विवाहदीक्षा, तां विवाहदीक्षाम्। नरेन्द्रस्य कन्याः नरेन्द्रकन्याः। (ष० त०) संश्चासौ पतिश्च सत्पतिः तं सत्पतिम् (कर्म०)। तमः नुदतीति तमोनुद्, तं तमोनुदम्। दक्षस्य सुताः दक्षसुताः।

कोशः—'दानं मतङ्गजमदे रक्षणच्छेदशुद्धिषु। विश्राणनेऽपि' इत्यनेकार्थः। 'गुरू गीष्पतिपित्राद्यौ' 'विवाहोपयामाः पाणिपीडनम्', 'धवः प्रियः पतिर्भर्ता' त चामराः। 'तमोनुदोग्निचन्द्रार्काः' इति विश्वः।

भावार्थः—क्षत्रियाणां द्वाविंशे वर्षे विहितस्य केशान्तसंस्कारस्य पश्चात् दिलीपः रघोः विवाहं सम्पादितवान्। राजकुमार्यः एनं प्राप्य, दक्षसुताः चन्द्र प्राप्य यथा बभासिरे, तथा अभासन्त।

हिन्दीश्लोकार्थः—यौवनावस्था प्राप्त होने के बाद दिलीप महाराज के रघु का 'केशान्त' संस्कार हो चुकने के बाद विवाह संस्कार सम्पन्न किया।

राजकुमारियाँ रघु को पाकर, जैसे दक्ष की कन्याएँ चन्द्रमा को पाकर सुशोभित हुई थीं वैसे ही शोभित हुईं ॥ ३३ ॥

युवा युगव्यायतबाहुरंसलः कपाटवक्षाः परिणद्धकन्धरः ।
वपुःप्रकर्षादजयद् गुरुं रघुस्तथाऽपि नीचैर्विनयाददृश्यत ॥३४॥

प्रसङ्गः—रघुवंश महाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके युवावस्था सम्पन्नेऽपि समुन्नत शरीरस्य विनयाद् नम्रता वर्णितास्ति ।

अन्वयः—युवा युगव्यायतबाहुः अंसलः कपाटवक्षा परिणद्धकन्धरः रघुः वपुः प्रकर्षाद् गुरुम् अजयत्, तथापि विनयाद् नीचैः अदृश्यत ।

वाच्य०—यूवा यूगव्यायतबाहुना अंसलेन कपाटवक्षसा परिणद्धकन्धरेण रघुणा गुरुः अजीयत (कर्म०)। विनयाद् रघुं नीचरपश्यन् । (कर्तृ०) 'जनाः' इति शेषः ।

चन्द्रिका—युवा=तरुणः, युगवद्=यानाङ्गदारुविशेषवद्, व्यायतौ=दीर्घौ, बाहू=भुजौ यस्य सः युगव्यायतबाहुः । आजानुबाहुरित्यर्थः । अंसलः बलवान् कपाटवद् वक्षः यस्य स कपाटवक्षाः अररोराः, 'कपाटमररं तुल्ये' इत्यमरः । 'परिणद्धा=विशाला, कन्धरा=ग्रीवा, 'ग्रीवायां शिरोधिः कन्धरेत्यपि' इत्यमरः, यस्यैवम्भूतः । रघुः=दिलीपात्मजः, वपुःप्रकर्षाद्=शरीरोत्कर्षात् ( युवकशरीरत्वात्), गुरुं=पितरं दिलीपम्, अजयत्=पराजितवान् । तथापि शरीरसौष्ठवेन =पितुरुन्नतत्वेऽपि, विनयात्=नम्रतया, नीचैः=प्रह्वः, अदृश्यत=व्यलोक्यत, लोकैरिति शेषः ।

सञ्जीविनी—युवेति । युवा । युगो नाम धुर्यस्कन्धगः सच्छिद्रप्रान्तो यानाङ्गभूतो दारुविशेषः । 'यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु' इत्यमरः । 'युगवद् व्यायतौ दीर्घौ बाहू यस्य सः । असावस्य स्त इत्यंसलो बलवान् मांसलश्चेति वृत्तिकारः । 'बलवान्मांसलोंऽसलः' इत्यमरः । 'वत्सांसाभ्यां कामबले' इति लच्प्रत्ययः । कपाटवक्षाः परिणद्धकन्धरो विशालग्रीवः । 'परिणाहो विशालता' इत्यमरः । रघुर्वपुषः प्रकर्षादाधिक्याद्यौवनकृताद् गुरुं पितरमजयत् । तथाऽपि विनयान्नम्रत्वेन नीचैरल्पकोऽदृश्यत । अनेनानौद्धत्यं च विवक्षितम् ।

समासः--युगवद् व्यायतौ बाहू यस्य सः युगव्यायतबाहुः। कपाटमिव वक्षः यस्य सः कपाटवक्षाः। परिणद्धा कन्धरा यस्य सः परिणद्धकन्धरः (बहु० ३ स्थलेष्वपि)। वपुषः प्रकर्षः वपुःप्रकर्षः, तस्माद् वपुःप्रकर्षात्।

कोशः—'वयस्थस्तरुणो युवा' 'यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु' 'बलवान्मांसलोऽसलः' 'कपाटमररं तुल्ये' 'उरो वत्सञ्च वक्षश्च' 'परिणाहो विशालता' 'ग्रीवायां शिरोधिः कन्धरेत्यपि' 'अल्पे नीचैर्महत्युच्चैः' इति चामरः।

भावार्थः—यद्यपि तरुणत्वाद् रघुः हृष्टपुष्टाङ्गः आसीत्। (अस्य वक्षःस्थलं विपुलं, दीर्घौ बाहू ग्रीवा च विशाला) दिलीपस्य तु वृद्धप्रायत्वात् शरीरं जर्जरितमासीत्। एवमपि रघुः सुशिक्षितत्वात् पितुः समक्षं विनम्र एव आसीदित्यर्थः।

हिन्दीश्लोकार्थः—युवक, जूआ जैसी लम्बी भुजावाले, बलिष्ठ, किवाड़ की भाँति चौड़ी छाती वाले, तथा विशालग्रीवा से युक्त रघु ने शरीर की उत्कृष्टता से अपने पिता को जीत लिया था, तथापि विनय से नम्र ही दीख पड़ते थे ॥ ३४ ॥

ततः प्रजानां चिरमात्मना धृतां नितान्तगुर्वी लघयिष्यता धुरम्।
निसर्गसंस्कारविनीत इत्यसौ नृपेण चक्रे युवराजशब्दभाक् ॥३५॥

प्रसङ्गः—महाकवि कालिदासविरचिते रघुवंशमहाकाव्ये विद्यमानेऽस्मिन् श्लोके रघोः युवराजपदप्राप्तेः वर्णनमस्ति।

अन्वयः—ततः आत्मना चिरं धृतां नितान्तगुर्वी प्रजानां धुरं लघयिष्यता नृपेण असौ निसर्गसंस्कारविनीतः इति युवराजशब्दभाक् चक्रे।

वाच्य०—प्रजानां धुरं लघयिष्यन् नृपोऽमुं निसर्गसंस्कारविनीतमिति युवराज शब्दभाजं चकार (कर्तृ०)।

चन्द्रिका—ततः=अनन्तरम्, आत्मना=स्वेन, चिरं=दीर्घकालपर्यन्तम्, धृतां=ऊढाम्, नितान्तगुर्वीम्=एकान्तभारवतीम्, प्रजानां=जनानाम्, धुरं=पालनभारम्, लघयिष्यता=लघु करिष्यता, स्वल्पभारां=[illegible], नृपेण=राजा दिलीपेन, असौ=रघुः, निसर्गसंस्काराभ्यां प्रकृत्या शास्त्राध्ययनेन च,

विनीतः—प्रश्रितः इति हेतोः, युवराजशब्दभाक्—युवराजपदवाच्यः, चक्रे—विदधे। राजा दिलीपः रघुं युवराजं विहितवान्।

सञ्जीविनी—तत इति। तत आत्मना चिरं धृतां नितान्तगुर्वीम्। 'वोतो गुणवचनात्' इति ङीष्। प्रजानां धुरं पालनप्रयासं लघयिष्यता लघु करिष्यता। 'तत्करोति तदाचष्टे' इति लघुशब्दाण्णिच्। ततो 'लृटः सद्वा' इति शतृप्रत्ययः। नृपेण दिलीपेनासौ रघुर्निसर्गेण स्वभावेन संस्कारेण शास्त्राभ्यासजनितवासनया च विनीतो नम्र इति हेतोः। युवराज इति शब्दं भजतीति तथोक्तः। 'भजो ण्विः' इति ण्विप्रत्ययः। चक्रे कृतः। 'द्विविधो विनयः स्वाभाविकः कृत्रिमश्च' इति कौटिल्यः। तदुभयसम्पन्नत्वात्पुत्रं युवराजं चकारेत्यर्थः। अत्र कामन्दकः—'विनयोपग्रहान्भूत्यै कुर्वीत नृपतिः सुतान्। अविनीतकुमारं हि कुलमाशु विशीर्यते॥ विनीतमौरसं पुत्रं यौवराज्येऽभिषेचयेत्॥' इति।

समासः—नितान्तं गुर्वी नितान्तगुर्वी, तां नितान्तगुर्वीम्। लघुं करिष्यन्निति लघयिष्यन्, तेन लघयिष्यता। निसर्गश्च संस्कारश्च निसर्गसंस्कारौ (द्वन्द्व०), निसर्गसंस्काराभ्यां विनीतः (तृ० त०) निसर्गसंस्कारविनीतः। युवा चासौ राजा च युवराज (कर्म०) युवराजस्य शब्दः युवराजशब्दः (ष० त०) युवराजशब्दं भजते इति युवराजशब्दभाक्। नॄन् पातीति नृपः, तेन नृपेण।

कोशः—'प्रजा स्यात् सन्ततौ जने' 'तीव्रैकान्तनितान्तानि' 'स्वरूपं च स्वभावश्च निसर्गश्च' 'विनीतप्रश्रिताः समाः' 'इति हेतुप्रकरण—' 'नृपभूपमहीक्षितः' इति चामराः।

भावार्थः—ततो राजा दिलीपः गुरुं प्रशासनभारं स्वोपरि चिरात् स्थितं लघुं कर्तुम् इच्छन् स्वभावेन शास्त्राभ्यासादिना च विनयसम्पन्नं रघुं युवराजं चकार।

हिन्दीश्लोकार्थः—इसके बाद स्वयं बहुत समय से धारण किए हुए गरिष्ठ प्रजापालन के भार को हल्का करने वाले राजा दिलीप ने 'यह रघु स्वभाव और शास्त्राभ्यासादि से विनीत है' इस कारण से उसे युवराज पद से युक्त किया अर्थात् युवराज बनाया॥३५॥

नरेन्द्रमूलायतनादनन्तरं तदास्पदं श्रीर्युवराजसंज्ञितम् ।
अगच्छदंशेन गुणाभिलाषिणी नवावतारं कमलादिवोत्पलम् ॥३६॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीयसर्गे विद्यमानेऽस्मिन् श्लोके रघुं युवराजं सम्प्राप्य लक्ष्मीः सार्थका जातेति वर्णितमस्ति।

अन्वय—गुणाभिलाषिणी श्रीः नरेन्द्रमूलायतनात् अनन्तरं युवराजसंज्ञितं तदास्पदं कमलाद् नवावतारम् उत्पलम् इव अंशेन अगच्छत् ।

वाच्य०—गुणाभिलाषिण्यां श्रिया अंशेन युवराजसंज्ञितः तदास्पदम् अगम्यत । (कर्म०)

चन्द्रिका—गुणाभिलाषिणी—विनयवीर्यादीन्- सौन्दर्यसौरभ्यादींश्च वाञ्छन्ती, श्रीः=राज्यलक्ष्मीः, नरेन्द्रः=दिलीप एव, मूलायतनं=मुख्यस्थानं, तस्मात्=नरेन्द्रमूलायतनात्, अनन्तरम्=अव्यवधानेन स्थितम्, युवराजसंज्ञितं=युवराजपदवाच्यम्, तदास्पदं रघुरूपमात्मस्थानम्, उपमां निरूपयति—कमलात् पद्मात्, नवावतारं=नूतनतया उत्पन्नम्, उत्पलम् इव=अरविन्दमिव, अंशेन=कतिपयकलाभिः, अगच्छत्=अयासीत् ।

सञ्जीविनी—नरेन्द्रेति । गुणान्विनयादीन्सौरभ्यादींश्चाभिलषतीति गुणाभिलाषिणी श्री राज्यलक्ष्मीः पद्माश्रया च नरेन्द्रो दिलीप एव मूलायतनं प्रधानस्थानं तस्मात् । अपादानात् । अनन्तरं सन्निहितम् । युवराज इति संज्ञास्य सञ्जाता युवराजसंज्ञितम् । तारकादित्वादितच्प्रत्ययः । आत्मनः पदं स्थानमास्पदम् । 'आस्पदं प्रतिष्ठायाम्' इति निपातः । स रघुरित्यास्पदं तदास्पदम् । कमलाच्चिरोत्पन्नात् नवावतारमचिरोत्पन्नमुत्पलमिव । अंशेनागच्छत् । स्त्रियो हि यूनि रज्यन्त इति भावः ।

समासः—मूलं च तत् आयतनञ्च मूलायतनम् (कर्म०) नरेन्द्र एव मूलायतनं नरेन्द्रमूलायतन (कर्मधारय०) तस्मात् नरेन्द्रमूलायतनात् । न विद्यते अन्तरं यस्य सः अनन्तरः, (बहु०) तम् अनन्तरम् । युवराज इति संज्ञा अस्य सञ्जाता इति युवराजसंज्ञितः त युवराजसंज्ञितम् । गुणान् अभिलषति इति गुणाभिलाषिणी । नवः अवतारः यस्य तत् नवावतारम्, तत् नवावतारम्, स इत्यास्पदं तदास्पदम्, तत् ।

कोशः—'कमला श्रीर्हरिप्रिया' इत्यमरः। 'अवतारस्तु नद्यादितीर्थेऽवतरणेऽपि च' इत्यनेकार्थ०। 'अग्रभागो तु वण्टके' इत्यमरः।

'भावार्थः—यथा कमलालया लक्ष्मीः सौन्दर्यसौरभ्यादिगुणकृष्टा नूतनोदितं पद्ममंशेन याति तथैव राज्यलक्ष्मीरपि दिलीपरूपमूलस्थानात् युवराजपदराजितं रघुरूपं स्वस्थानं विनयवीर्यौदार्याद्याकृष्टा अंशेनाश्रितवती।

हिन्दीश्लोकार्थः—वीर्यविनयादि गुणों को चाहने वाली राज्यलक्ष्मी राजा दिलीप रूप मूलस्थान से सन्निहित (पास में रहने वाले) युवराज पद को प्राप्त रघुरूप अपने स्थान को, जैसे पुराने कमल से नवीन उगे हुए कमल को सुगन्धि सौन्दर्यादि गुण चाहने वाली पद्मालया लक्ष्मी एक अंश से जाती है, वैसे ही एक अंश से गई ॥ ३६ ॥

विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव।
बभूव तेनातितरां सुदुःसहः कटप्रभेदेन करीव पार्थिवः ॥ ३७ ॥

सन्दर्भः—द्रष्टव्यः श्लोक ३०।

प्रसङ्गः—अस्मिन् स्थले रघोः सकाशात् दिलीपः दुर्धर्षः जातेति वर्णितमस्ति।

अन्वयः—सारथिना वायुना विभावसुः इव 'सारथिना' घनव्यपायेन गभस्तिमानिव 'सारथिना' कटभेदेन करीव पार्थिवः सारथिना तेन अतितरां सुदुःसहः बभूव।

वाच्य०—विभावसुना इव गभस्तिमता इव करिणा इव पार्थिवेन सुदुःसहेन बभूवे (भाव०)

चन्द्रिका—सारथिना=सहायकेन, वायुना=पवनेन, विभावसुरिव=अनलो यथा, सारथिना=सहायभूतेन, घनव्यपायेन=मेघापगमेन, गभस्मिमानिव=सूर्य इव, सारथिना=साह्यप्रदायिना, कष्टप्रभेदेन=गण्डस्फुटनेन, करीव=गजो यथा, पार्थिवः= दिलीपः, सारथिना=शासने सहयोगदात्रा, तेन=रघुणा, अतितराम्=नितान्तं, सुदुःसहः=सुतरां दुर्धर्षः, बभूव=संवृत्तः।

सञ्जीविनीः—विभावसुरिति। सारथिना सहायभूतेन। एतद्विशेषणमुत्तरवाक्येष्वप्यनुषञ्जनीयम्। वायुना विभावसुर्वह्निरिव। 'सूर्यवह्नी विभा-

वसू' इत्यमरः । घनव्यपायेन शरत्समयेन सारथिना गभस्तिमान्सूर्य इव। कटो गण्डः । 'गण्डः कटो मदो दानम्' इत्यमरः । तस्य प्रभेदः स्फुटनम् । मदोदय इत्यर्थः । तेन करीव पार्थिवो दिलीपस्तेन रघुणाऽतितरामत्यन्तं सुदुःसहः सुष्ठ्वसह्यो बभूव ।

समासः—धनानां व्यपायो नाशो यस्मिन् ( शरदृतौ ) सः घनव्यपायः बहु०) तेन घनव्यपायेन । गभस्तयः सन्त्यस्य इति गभस्तिमान् । कटस्य प्रभेदः कटप्रभेदः (ष०त०) तेन कटप्रभेदेन । करः अस्यास्तीति करी ।

कोशः—'सूर्यवह्नी विभावसू' 'घनो मेघे मूर्तगुण' 'किरणोस्रमयूखांशुगभस्तिघृणिपृश्नयः' 'गण्डः कटो मदो दानम्' 'कुञ्जरो वारणः करी' इत्यमराः ।

भावार्थः—वायुसाहाय्येन अनल इव, शरदृतुसहकारेण (मेघाभावात्) सूर्य इव मदोदयेन गज इव, दिलीपोऽपि सहकारिणा रघुणा सुदुर्धर्षः (अतितेजस्वी) जातः ।

हिन्दीश्लोकार्थः—सहयोग करनेवाले वायु से जैसे अग्नि, सहायकर्ता शरदृतु से जैसे सूर्य, सहायता करनेवाले मदोदय से जैसे हाथी अत्यन्त असहनीय हो जाता है, वैसे ही सहयोग करनेवाले रघु से दिलीप अत्यन्त ही असह्य (तेजस्वी) हुए ॥३७॥

नियुज्य तं होमतुरङ्गरक्षणे धनुर्धरं राजसुतैरनुद्रुतम् ।
अपूर्णमेकेन शतक्रतूपमः शतं क्रतूनामपविघ्नमाप सः । ३८॥

प्रसङ्गः—रघुवंश महाकाव्ये तृतीये सर्गे विद्यतेऽस्मिन् श्लोके रघोः अश्वमेधयागे अश्वरक्षणे नियुक्तिः वर्णितास्ति ।

अन्वयः—शतक्रतूपमः सः राजसुतैः अनुद्रुतं धनुर्धरं तं होमतुरङ्गरक्षणे नियुज्य एकेन अपूर्णं क्रतूनां शतम् अपविघ्नं 'यथा तथा' आप ।

वाच्य०—शतक्रतूपमेन तेन क्रतूनां शतम् आपे (कर्म०)

चन्द्रिका—शतक्रतूपमः=इन्द्रसदृशः, स=दिलीपः, राजसुतैः=पार्थिवतनयैः, अनुद्रुतम्=अनुबद्धम्, अन्यराजपुत्राः=समवयस्का रघुमनुगच्छन्ति स्मेति यावत्, धनुर्धरं=चापभृतम्, तं=रघुम्, होमतुरङ्गाणां=अश्वमेधयागाङ्गभूतानां घोटकानाम् रक्षणे=परित्राणे, कोऽप्यन्यो राजा तुरङ्गबन्धनाय प्रवर्तेत चेत् ते न सह

युद्धं कृत्वा तं पराजित्याश्वयोन्मोचनमेव रक्षणमभीष्टम् । नियुज्य-प्रवर्त्त्य, एकेन एकसंख्यया. अपूर्णं-हीनम् नवनवतीम्, अपविघ्नं=निरन्तरायम् यथा स्यात्तथा (क्रियाविशेषणम्), आप=लेभे । अन्वतिष्ठदित्यर्थः ।

सञ्जीविनीः—नियुज्येति । शतक्रतुरिन्द्र उपमा यस्य स शतक्रतूपमः स दिलीपः । 'शतं वै तुल्या राजपुत्रा देवा आशापालाः' इत्यादिश्रुत्या । राजसुतैरनुद्रुतमनुगतं धनुर्धरं तं रघुं होमतुरङ्गाणां रक्षणे नियुज्य । एकेन क्रतुनाऽपूर्णमेकोनं क्रतूनामश्वमेधानां शतमपविघ्नमपगतविघ्नं यथा तथाऽऽप ।

समासः—होमस्य तुरङ्गाः होमतुरङ्गाः, होमतुरङ्गाणां रक्षणं होमतुरङ्गरक्षणं तस्मिन् होमतुरङ्गरक्षणे (ष० त०) । धनुषः धरः धनुर्धरः, तं धनुर्धरम् । न पूर्णम् अपूर्णम्, तत् अपूर्णम् (नञ् त०) । राज्ञां सुताः राजसुताः तैः राजसुतैः । शतं क्रतवो यस्य सः शतक्रतुः । शतक्रतुः उपमा यस्य सः शतक्रतूपमः (बहु०) । अपगताः विघ्नाः यस्मिन् कर्मणि तद्यथा भवति तथा अपविघ्नम् ।

कोशः—'शक्रः शतमन्युर्दिवस्पतिः' 'उपमोपमानं स्यात्' 'निषङ्गयस्त्री धनुर्धरः' 'तुरङ्गाश्चतुरङ्गमाः' 'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः' 'विघ्नोऽन्तरायः प्रत्यूहः' इति चामरः ।

भावार्थः—इन्द्रसमानः दिलीपः राजपुत्रानुगतं रघुम् अश्वमेधीयहयरक्षणे सम्प्रेष्य निर्विघ्नम् एकोनशतम् अश्वमेधयागान् अन्वतिष्ठत् इति भावः ।

हिन्दीश्लोकार्थः—इन्द्र के सदृश दिलीप ने राजकुमारों से अनुसृत धनुर्धारी रघु को होम के घोड़ों के रक्षण में नियुक्त कर एक से कम ( निन्यानवे ) अश्वमेध याग निर्विघ्न समाप्त किया ॥३८॥

ततः परं तेन मखाय यज्वना तुरङ्गमुत्सृष्टमनर्गलं पुनः ।
धनुर्भृतामग्रत एव रक्षिणां जहार शक्रः किल गूढविग्रहः ॥३९॥

प्रसङ्गः—महाकविकालिदासविरचिते तृतीयसर्गे विद्यमानेऽस्मिन् श्लोके इन्द्रेण यज्ञाश्वचौर्यं वर्णितमस्ति ।

अन्वयः—ततः परं यज्वना तेन पुनर्मखाय उत्सृष्टम् अनर्गलं तुरङ्गं धनुर्भृतां रक्षिणाम् अग्रतः एव शक्रः गूढविग्रहः 'सन्' जहार किल ।



वाच्य०—उत्सृष्टोऽनर्गलस्तुरङ्गः शक्रेण गूढविग्रहेण जह्रे (कर्म०) ।

चन्द्रिका—तत=एकोनशतयागाचरणस्य, परम्=अनन्तरम्, यज्वना=यथाविधि कृतयागेन, तेन=दिलीपेन, पुनः=शततमवारम्, मखाय=अश्वमेधयागाय, उत्सृष्टम्=उन्मुक्तम्, अनर्गलम्=अप्रतिहतम्, तुरङ्गम्=अश्वम्, धनुर्भृतां=चापधारिणाम्, रक्षिणां=रक्षकाणाम्, अग्रत एव=पुरस्तादेव, शक्रः=इन्द्रः, गूढविग्रहः=प्रच्छन्नदेहः, 'सन् भवन्', जहार=अपाहरत्, किलत्यैतिह्ये।

सञ्जीविनी—तत इति। ततः परमेकोनशतक्रतुप्राप्त्यनन्तरं यज्वना विधिनेष्टवता तेन दिलीपेन पुनः पुनरपि मखाय मखं कर्तुम्। 'क्रियार्थोपपदस्य' इत्यादिना चतुर्थी। उत्सृष्टं मुक्तमनर्गलमप्रतिबन्धम्। अव्याहतस्वैरगतिमित्यर्थः। अपर्यावर्त्तयन्तोऽश्वमनुचरन्ति' इत्यापस्तम्बस्मरणात् तुरङ्गं धनुर्भृतां रक्षिणां रक्षकाणामग्रत एव शक्रो गूढविग्रहः सन्। जहार किल। किलेत्यैतिह्यम्।

समासः—न अर्गलं यस्य सः अनर्गलस्तम् अनर्गलम्। धनुः बिभ्रतीति धनुर्भृतः तेषां धनुर्भृताम्। गूढो विग्रहो (बहु०) यस्य सः गूढविग्रहः।

कोशः—'सप्ततन्तुर्मखः क्रतुः 'यज्वा तु विधिनेष्टवान्' 'तद्विष्कम्भोऽर्गलं न ना।' 'पुनः पुनः शश्वद् अभीक्ष्णमसकृत् समाः' 'वार्ता सम्भाव्ययोः किल' इत्यमराः।

भावार्थः—दिलीपः शततमाय अश्वमेधयागाय पुनः राजसुतानुगतं रघुमेव रक्षकं कृत्वा अव्याहतं तुरगं विससर्ज। इन्द्रः गूढशरीरेणागत्य धनुर्धारिणां पुर एव तमपाहरत् इति भावः।

हिन्दीश्लोकार्थः—निन्यानबे अश्वमेध याग करने के बाद, यथाशास्त्र यज्ञ किए हुए दिलीप से पुनः याग के लिए छोड़े गए बिना रोकटोक चलने वाले घोड़े को धनुर्धारी रक्षकों के सामने ही इन्द्र गुप्त देहधारी होकर हर ले गया॥ ३९॥

विषादलुप्तप्रतिपत्ति विस्मितं कुमारसैन्यं सपदि स्थितं च तत्।
वसिष्ठधेनुश्च यदृच्छयाऽऽगता श्रुतप्रभावा ददृशेऽथ नन्दिनी॥४०॥

प्रसङ्गः—रघुवंशमहाकाव्ये तृतीयसर्गे विद्यमानेऽस्मिन् श्लोके यज्ञाश्वचौर्ये जाते भाग्यात् नन्दिनीदर्शनं प्रदर्शितमस्ति।

अन्वयः—तत् कुमारसैन्यं सपदि विषादलुप्तप्रतिपत्ति विस्मितं सत् स्थितम् च, अथ श्रुतप्रभावा यदृच्छया आगता नन्दिनी वसिष्ठधेनुश्च ददृशे ।

वाच्य०—तेन कुमारसैन्येन विषादलुप्तप्रतिपत्तिना विस्मितेन स्थितम् (भाव०) । अथ श्रुतप्रभावां यदृच्छयागतां नन्दिनीं वसिष्ठधेनुश्च ददर्श (कर्तृ०) ।

चन्द्रिका—तत्=प्रसिद्धं, कुमारसैन्यं=युवराजरघुचमूः, सपदि = सद्यः, विषादेन=खेदेन, लुप्ता=नष्टा, प्रतिपत्तिः = कर्तव्यज्ञानं यस्य तत् विषादलुप्तप्रतिपत्ति=विस्मितम् आश्चर्यचकितम् 'सत् भवेत्' स्थितम् । चो वाक्यालङ्कारे । अथ=पश्चात्, श्रुतप्रभावा=प्रसिद्धमाहात्म्या 'आकर्णितदिलीपवरप्रदानसामर्थ्या वा' यदृच्छया=अकस्माद्, आगता=आयाता, नन्दिनी नाम=कामधेनुतनया, वसिष्ठधेनुः=मुनिवसिष्ठस्य गौः, ददृशे=च दृष्टा च । चकाराभ्यां द्वाभ्यां विस्मयेनावस्थानधेनुदर्शनयोः अविलम्बः सूचितः ।

सञ्जीविनी—विषादेति । तत् कुमारस्य सैन्यं सेना सपदि । विषादः इष्टनाशकृतो मनोभङ्गः । तदुक्तम्—'विषादश्चेतसो भङ्ग उपायाभावनाशयोः' इति । तेन लुप्ता प्रतिपत्तिः कर्तव्यज्ञानं यस्य तत्तथोक्तम् । विस्मितमश्वनाशस्याकस्मिकत्वादाश्चर्याविष्टं सत् । स्थितं तस्थौ । अथ श्रुतप्रभावा यदृच्छया स्वेच्छयाऽऽगता, रघोः स्वप्रसादलब्धत्वादनुजिगृक्षयेति भावः । नन्दिनी नाम । वसिष्ठधेनुश्च ददृशे । द्वौ चकारावलम्बसूचकौ ।

समासः—कुमारस्य सैन्यं कुमारसैन्यम् (ष० त०) । विषादेन लुप्ता प्रतिपत्तिः यस्य तत् विषादलुप्तप्रतिपत्ति (बहु०) । श्रुतः प्रभावः यस्याः सा (बहु०) श्रुतप्रभावा । वसिष्ठस्य धेनुः वसिष्ठधेनुः ।

कोशः—'प्रेक्षोपलब्धिश्चित् संवित्प्रतिपज्ज्ञप्तिचेतनाः' 'वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्' 'सद्यः सपदि तत्क्षणे' 'वित्तविज्ञातविश्रुताः' 'यदृच्छा स्वैरिता' इति चामराः ।

भावार्थः—रघुसैन्ये विषादो व्याप्तः, कर्तव्यज्ञानं विनष्टम् सहसा तुरङ्गादर्शनाद् आश्चर्यं जातम् । तदैव यदृच्छया महासामर्थ्या नन्दिनी समागतेति भावः ।

हिन्दीश्लोकार्थः—तत्क्षण ही रघु की सेना खेद से कर्तव्यज्ञानशून्य हो गई।

आश्चर्यचकित हो कर योंही रह गई। तब प्रसिद्धप्रभावशालिनी वसिष्ठजी की गाय नन्दिनी अकस्मात् दिखाई दी ॥ ४० ॥

तदङ्गनिस्यन्दजलेन लोचने प्रमृज्य पुण्येन पुरस्कृतः सताम् ।
अतीन्द्रियेष्वप्युपपन्नदर्शनो बभूव भावेषु दिलीपनन्दनः ॥४१॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीयसर्गे विद्यमानेऽस्मिन् श्लोके नेत्रयोः नन्दिन्यागोमूत्रलेपेन रघोः दिव्यदृष्टेः वर्णनमस्ति।

अन्वयः—सतां पुरस्कृतः दिलीपनन्दनः पुण्येन तदङ्गनिस्यन्नजलेन लोचने प्रमृज्य अतीन्द्रियेषु भावेष्वपि उपपन्नदर्शनः बभूव।

वाच्य०—सतां पुरस्कृतेन दिलीपनन्दनेन उपपन्नदर्शनेन बभूवे। (भाव०)

चन्द्रिका—सतां=सज्जनानां, पुरस्कृतः=पूजितः, दिलीपनन्दनः=दिलीपसुतो रघुः, पुण्येन=पवित्रेण, तस्याः=धेनोः, अङ्गस्य=देहस्य, निस्यन्दजलेन=मूत्रसलिलेन, लोचने=नेत्रे, प्रमृज्य=संक्षाल्य, अतीन्द्रियेषु=इन्द्रियातीतेषु, दिव्येष्विति यावत्, भावेष्वपि=पदार्थेष्वपि, उपपन्नदर्शनः=प्राप्तावलोकनसामर्थ्यः बभूव=अभूत्।

सञ्जीविनी—तदङ्गेति। सतां पुरस्कृतः पूजितो दिलीपनन्दनो रघुः पुण्येन तस्या नन्दिन्या यदङ्गं तस्य निस्यन्दो द्रवः स एव जलम् मूत्रमित्यर्थः। तेन लोचने प्रमृज्य शोधयित्वा। अतीन्द्रियेष्विन्द्रियाण्यतिक्रान्तेषु। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः। द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु परवल्लिङ्गताप्रतिषेधाद्विशेष्यनिघ्नत्वम्। भावेष्वपि वस्तुषूपपन्नदर्शनः सम्पन्नसाक्षात्कारशक्तिर्बभूव।

समासः—तस्या अङ्गं तदङ्गं, तदङ्गस्य निस्यन्दः तदङ्गनिस्यन्दः, तदङ्गनिस्यन्दस्य जलं तदङ्गनिस्यन्दजलम् (त्रिष्वपि ष० तत्पु०)। तेन तदङ्गनिस्यन्दजलेन। इन्द्रियाण्यतिक्रान्ताः अतीन्द्रियाः तेषु अतीन्द्रियेषु। उपपन्नं दर्शनं यस्य स उपपन्नदर्शनः। (बहु०) दिलीपस्य नन्दन दिलीपनन्दनः।

कोशः—'पुरस्कृतः पूजिते' 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्' इत्यमरः। पुण्यं त्रिषु मनोज्ञे स्यात् क्लीबं सुकृतधर्मयोः' इति विश्वः। 'लोचनं चक्षुरक्षिणी' इत्यमरः। 'भावोऽभिप्रायवस्तुनोः' इत्यनेकार्थ०।

भावार्थः—सज्जनाधृतः रघुस्तस्याः पुण्येन प्रस्रावजलेन नयने क्षालयित्वा दिव्यदर्शनशक्तिसम्पन्नो जात इति भावः।

हिन्दीश्लोकार्थः—सज्जनों से पूजित दिलीप महाराज के पुत्र रघु नन्दिनी के शरीर से बहने वाले पुण्य जल (गोमूत्र) से आँखो को धोकर अतीन्द्रिय इन्द्रियों से न दिखाई देने वाली) वस्तुओं में भी देखने की शक्ति से युक्त हो गए ॥४१॥

स पूर्वतः पर्वतपक्षशातनं ददर्श देवं नरदेवसम्भवः।
पुनः पुनः सूतनिषिद्धचापलं हरन्तमश्वं रथरश्मिसंयतम् ॥४२॥

सन्दर्भः—द्रष्टव्यः श्लोक ३०।

प्रसङ्गः—अत्र रघुणा यज्ञाश्व हर्तुरिन्द्रदर्शनं वर्णितमस्ति।

अन्वयः—नरदेवसम्भवः सः पुनः पुनः सूतनिषिद्धचापलं रथरश्मिसंयतम् अश्वं हरन्तं पर्वतपक्षशातनं देवं पूर्वतः ददर्श।

वाच्य०—नरदेवसम्भवेन तेनाश्वं हरन् पर्वतपक्षशातनो देवः पूर्वतः ददृशे (कर्मवा०)।

चन्द्रिका:—नरदेवसम्भवः=पार्थिवपुत्रः, सः=रघुः, पुनः पुनः=वारं वारम्, सूतेन=सारथिना, निषिद्धचापलं=निरुद्धचाञ्चल्यम्, रथस्य=स्यन्दनस्य, रश्मिभिः=रज्जुभिः, संयतम्=बद्धम्, अश्वं तुरगम्, हरन्तं=नयन्तम्, पर्वतानाम् =अचलानाम्, पक्षशातनं=गरुच्छेदकम्, देवम्=इन्द्रम्, पूर्वतः=पूर्वभागे, ददर्श=व्यलोकयत्।

सञ्जीविनी—स इति। नरदेवसम्भवः स रघुः पुनः पुनः सूतेन निषिद्धचापलं निवारितोद्धत्य रथस्य रश्मिभिः प्रग्रहैः। 'किरणप्रग्रहौ रश्मी' इत्यमरः। संयतं बद्धमश्वं हरन्तं पर्वतपक्षाणां शातनं छेदकं देवमिन्द्रं पूर्वतः पूर्वस्यां दिशि ददर्श।

समासः—नरेषु देवः नरदेवः (स० त०) नरदेवात् सम्भवो यस्य सः नरदेवसम्भवः (बहु०)। चपलस्य इदं चापलम्, सूतेन निषिद्धं चापलं यस्य सः, तं सूतनिषिद्धचापलम् (बहु०)। रथस्य रश्मयः रथरश्मयः, रथरश्मिभिः संयतः रथरश्मिसंयतः, तं रथरश्मिसंयतम् (तृ० त०)। पर्वतानां पक्षाः पर्वतपक्षाः, पर्वतपक्षान् शातयतीति पर्वतपक्षशातनः, तं पर्वतपक्षशातनम्।

कोशः—'मुहुः पुनः पुनः शश्वत्' 'सूतः क्षत्ता च सारथिः' 'चञ्चलं चपलं चैव' 'तुरङ्गाश्चतुरङ्गमाः' 'शताङ्गः स्यन्दनो रथः' 'किरणप्रग्रहौ रश्मी' इत्यमरः।

भावार्थः—प्राप्तदिव्यदृष्टिः रघुः पूर्वस्यां दिशि मुहुर्मुहुः सारथिवार्यमाणचाञ्चल्यं रथरज्जुबद्धं तुरगं नयन्तं शक्रं दृष्टवान्।

हिन्दीश्लोकार्थः—राजा दिलीप के बालक रघु ने, बार-बार सारथि द्वारा जिसकी चचलता रोकी जा रही थी, और जो रथ की डोरी से बँधा हुआ था, ऐसे घोड़े को हरण करके जाते हुए पर्वतों के आँखों को काटने वाले देवराज इन्द्र को पूर्व भाग में देखा ॥४२॥

शतैस्तमक्ष्णामनिमेषवृत्तिभिर्हरिं विदित्वा हरिभिश्च वाजिभिः।
अवोचदेनं गगनस्पृशा रघुः स्वरेण धीरेण निवर्तयन्निव ॥४३॥

प्रसङ्गः—रघुवंश-महाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके रघोः यज्ञाश्वपहारी इन्द्रेण सह वार्तालापः वर्णितोऽस्ति।

अन्वयः—रघुः तम् अनिमेषवृत्तिभिः अक्ष्णां शतैः हरिभिः वाजिभिश्च हरिं विदित्वा एनं गगनस्पृशा धीरेण स्वरेण निवर्त्तयन् इव अवोचत्।

वाच्यः—रघुणा एषः निवर्तयतेव अवोचि। (कर्म०)

चन्द्रिका—रघुः=दिलीपनन्दनः, तम्=अश्वहारिणम्, अनिमेषवृत्तिभिः=निमीलनव्यापाररहितैः, अक्ष्णां=लोचनानाम्, शतैः=दशशत्या, तस्य=सहस्राक्षत्वात्, हरिभिः=नीलवर्णैः, वाजिभिश्च=तुरगैश्च, हरिम्=इन्द्रम्, विदित्वा=ज्ञात्वा, एनं=तुरगहारिणम्, गगनस्पृशा=आकाशचुम्बकेन, तारस्वरेणेति यावत्। धीरेण=गभीरेण ध्वनिना, निवर्तयन् इव=परावर्तयन्निव, अवोचत्=जगाद।

सञ्जीविनी—शतैरिति। रघुस्तमश्वहर्त्तारमनिमेषवृत्तिभिर्निमेषव्यापारशून्यैरक्ष्णां शतैर्हरिभिर्हरिद्वर्णैः। 'हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः' इति विश्वः। वाजिभिरश्वैश्च हरिमिन्द्रं विदित्वा। 'हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु' इति विश्वः। एनमिन्द्रं गगनस्पृशा व्योमव्यापिना धीरेण गम्भीरेण स्वरेण ध्वनिनैव निवर्त्तयन्निवावोचत्।

समासः—निमेषस्य वृत्तिः निमेषवृत्तिः, न विद्यते निमेषवृत्तिः येषां तानि

अनिमेषवृत्तीनि । तैः अनिमेषवृत्तिभिः । गगनं स्पृशतीति गगनस्पृक्, तेन गगनस्पृशा ।

कोशः—'चक्षुरक्षिणी' 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥'' इत्यमरो । 'हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः ।' इति विश्वः ।

भावार्थः—रघुः निर्निमेषैः लोचनसहस्रैः हरिद्वर्णवाजिभिश्च अश्वहारकम् इन्द्रं मत्वा निर्भयं गम्भीरेण गगनचुम्बिना नादेनेन्द्रं परावर्तयन्निव तमुवाच ।

हिन्दीश्लोकार्थः—रघु उन्हें ( अश्व ले जाने वाले को ) पलक न गिराने वाली सैकड़ों आँखों से तथा हरे रंग के घोड़ों से भी इन्द्र जानकर उनसे गगनव्यापी गम्भीर ध्वनि से ही मानो इन्द्र को लौटाते हुए बोले ॥४३॥

मखांशभाजां प्रथमो मनीषिभिस्त्वमेव देवेन्द्र ! सदा निगद्यसे ।
अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं प्रवर्त्तसे ॥४४॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीयसर्गे विद्यमानेऽस्मिन् श्लोके रघुणा यज्ञांशभोगीन्द्रः कथं ते यागभङ्गे प्रवृत्तिरिति पृष्टोऽस्ति ।

अन्वयः—हे देवेन्द्र ! मनीषिभिः त्वमेव मखांशभाजां प्रथमः 'इति' सदा निगद्यसे, 'तथापि' अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं प्रवर्तसे ?

वाच्य०—हे देवेन्द्र ! मनीषिणस्त्वामेव मखांशभाजां प्रथमं निगदन्ति (कर्तृ०) । त्वया क्रियाविघाताय कथं प्रवृत्यते ? (भाव०) ।

चन्द्रिका—हे देवेन्द्र !=अङ्ग सुरेश्वर ! मनीषिभिः=बुधैः, त्वमेव=भवानेव, मखांशभाजां=यज्ञभागभोगिनाम्, देवानामपि, प्रथमः=आद्यः, 'इति'='एवं', सदा=सर्वदा, निगद्यसे=उच्यसे, 'तथापि'='एवमपि', अजस्रम्=अनवरतम्, दीक्षाप्रयतस्य=नियमपवित्रस्य, मद्गुरोः=मत्पितुः, क्रियायाः=यज्ञकर्मणः, विघाताय=विनाशाय, कथं=केन प्रकारेण, प्रवर्तसे=उद्यतो भवसि ।

सञ्जीविनी—मखांशेति । हे देवेन्द्र ! मनीषिभिस्त्वमेव मखांशभाजां यज्ञभागभुजां प्रथमः सदा निगद्यसे कथ्यसे । तथाऽप्यजस्रदीक्षायां नित्यदीक्षायां प्रयतस्य मद्गुरोः क्रियाविघाताय कर्मविघाताय । क्रियां विहन्तुमित्यर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । कथं प्रवर्तसे ।

समासः—देवानाम् इन्द्रस्तत्सम्बुद्धौ हे देवेन्द्र ! मखस्य अंशाः मखांशाः, मखांशान् भजन्ते इति मखांशभाजः, तेषां मखांशभाजाम् । अजस्रं दीक्षा अजस्रदीक्षा, अजस्रदीक्षायां प्रयतः अजस्रदीक्षाप्रयतः, तस्य अजस्रदीक्षाप्रयतस्य । मम गुरुः मद्गुरुः तस्य मद्गुरोः । क्रियाया विघातः क्रियाविघातः, तस्मै क्रियाविघाताय ।

कोशः—'धीरो मनीषी ज्ञः प्राज्ञः' 'आरम्भो निष्कृतिः शिक्षा पूजनं सम्प्रधारणम् । उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः ॥' 'पुरस्तादिः पूर्वं-पौरस्त्यप्रथमाद्याः' 'नित्यानवरताजस्रम्' 'पवित्रः प्रयतः पूतः' 'गुरू गोष्पति-पित्राद्यौ' इत्यमराः ।

भावार्थः—विबुधाः भवन्तं यज्ञभागभागिषु आद्यं कथयन्ति, एवमपि नित्ययज्ञदीक्षायां पवित्रस्य मम पितुः यज्ञविनाशाय कथं भवान् यतते ? एवं न चेत् यज्ञाङ्गस्य तुरगस्य हरणं कथं युज्यताम् ? इति भावः ।

हिन्दीश्लोकार्थः—हे देवेन्द्र ! विद्वान् लोग तुम्हीं को यज्ञभाग के ग्रहण करने वालों में ( देवताओं में ) पहला बताते हैं । अनवरत यज्ञदीक्षा में पवित्र मेरे पिता के अश्वमेधयज्ञ को नष्ट करने में कैसे लगे हो ? ॥४४॥

त्रिलोकनाथेन सदा मखद्विषस्त्वया नियम्या ननु दिव्यचक्षुषा ।
स चेत्स्वयं कर्मसु धर्मचारिणां त्वमन्तरायो भवसि च्युतो विधिः ॥४५॥

प्रसङ्गः—रघुवंशमहाकाव्ये तृतीये सर्गे विद्यतेऽस्मिन् श्लोके रघुणा इन्द्रे यागरक्षणधर्मं परित्यज्य यज्ञान्तरे जाते हानिः वर्णितोऽस्ति ।

अन्वयः—त्रिलोकनाथेन दिव्यचक्षुषा त्वया मखद्विषः सदा नियम्याः ननु ? स त्वं धर्मचारिणाम् अन्तरायो भवसि चेत् 'तर्हि' विधिः च्युतः 'भवति' इति शेषः ।

वाच्य०—त्रिलोकनाथो दिव्यचक्षुः त्वं मखद्विषः सदा नियच्छेः ननु ? (कर्तृ०) तेन त्वया धर्मचारिणां कर्मसु स्वयम् अन्तरायेण भूयते विधिना च्युतेन 'भूयते' (भाव०) ।

चन्द्रिका—त्रिलोकनाथेन—त्रिभुवनस्वामिना, दिव्यचक्षुषा = ज्ञाननयनेन, त्वया = भवता इन्द्रेण, मखद्विषः—यज्ञशत्रवः, सदा—सर्वदा, नियम्याः—दण्ड-

नीयाः, ननुजिज्ञासायाम्, स त्वं=मखद्विण्नियन्ता भवान्, धर्मचारिणां=धार्मिकाणाम्, कर्मसु=धर्मकृत्येषु, स्वयम्=आत्मना, अन्तरायः=विघ्नः, भवसि=असि, चेत्=यदि, 'तर्हि'='तदा', विधिः = धर्माचरणम्, च्युतः = विलुप्तः, भवतीति शेषः।

सञ्जीविनी—त्रिलोकेति। त्रयाणां लोकानां नाथस्त्रिलोकनाथः। 'तद्धितार्थोत्तरपदसमाहारे च' इत्यनेनोत्तरपदसमासः। तेन त्रैलोक्यनियामकेन दिव्यचक्षुषाऽतीन्द्रियार्थदर्शिना त्वया मखद्विषः क्रतुविघातकाः सदा नियम्या ननु शिक्ष्याः खलु। स त्वं धर्मचारिणां कर्मसु क्रतुषु त्वमन्तरायो विघ्नो भवसि चेत् विधिरनुष्ठानं च्युतः क्षतः। लोके सत्कर्मकथैवास्तमियामित्यर्थः।

समासः—त्रयश्च ते लोकाश्च त्रिलोकाः (कर्मधा०) त्रिलोकानां नाथः त्रिलोकनाथः, तेन त्रिलोकनाथेन। दिवि भवं दिव्यं, दिव्यं चक्षुः यस्य सः दिव्यचक्षुः (बहु०), तेन दिव्यचक्षुषा। मखं द्विषन्तीति मखद्विषः। नियन्तुं योग्याः नियम्याः। धर्मं चरन्तीति धर्मचारिणः, तेषां धर्मचारिणाम्।

कोशः—'त्रिष्वथो जगती लोको विष्टपं भुवनं जगत्।' 'चक्षुरक्षिणी' 'सप्ततन्तुर्मखः क्रतुः' 'एकदा सर्वदा सदा' 'पक्षान्तरे चेद् यदि च' 'विघ्नोऽन्तरायः प्रत्यूहः' 'विधिर्विधाने दैवेऽपि' 'स्वयमात्मना' 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु।' इति चामराः।

भावार्थः—लोकत्रयस्वामी त्व सर्वदा दिव्यनेत्रेण परोक्षार्थदर्शिना धर्मविरोधिनः यत्र कुत्रापि भवेयुः तान् दण्डयेः खलु? एव स्थितौ स्वयं त्वं धार्मिकाणां धर्माचरणे विघ्नमाचरसि चेत् तदा धर्मकृत्यमेव विलुप्तं भवेत् इति भावः।

हिन्दीश्लोकार्थः—त्रिलोक के नाथ दिव्यदृष्टियुक्त तुमसे यज्ञ विरोधी सर्वदा दण्डित होने योग्य हैं। अतः ऐसे तुम धर्माचरण करने वालों के कार्यों में स्वयं विघ्न बनोगे तो धर्मानुष्ठान ही नष्ट हुआ ॥४५॥

तदङ्गमग्र्यं मघवन्महाक्रतोरमुं तुरङ्गं प्रतिमोक्तुमर्हसि।
पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम् ॥ ४६ ॥

प्रसङ्गः—रघुवंश-महाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके यज्ञाश्वपरित्यागाय रघुणा इन्द्रः प्रार्थितोऽस्ति।

अन्वयः—हे मघवन् ! तद् महाक्रतोः अग्रयम् अङ्गम् अमुं तुरङ्गं प्रतिमोक्तुम् अर्हसि । 'हि' श्रुतेः पथः दर्शयितारः ईश्वराः मलीमसां पद्धतिं न आददते ।

वाच्य०—त्वया तुरङ्गं प्रतिमोक्तुम् अर्ह्यसे ( भाव० ) श्रुतेः पथः दर्शयितृभिः मलीमसा पद्धतिः नादीयते (कर्म०) ।

चन्द्रिका—हे मघवन् !=अयि शक्र ! तत्=तस्मात् कारणात्, महाक्रतोः=अश्वमेधयागस्य, अग्रयं=प्रधानम्, अङ्गं=साधनम्, अमुम्=एनं, तुरङ्गं=तुरगम्, प्रतिमोक्तुं=परावर्तयितम, अर्हसि=योग्योऽसि । तथाहि; श्रुतेः = त्रय्याः, वेदस्य, पथः=मार्गस्य, दर्शयितारः=प्रदर्शकाः, ईश्वराः=समर्थाः, मलीमसां=सदोषां, पद्धतिं=सरणिम्, नाददते=नैवाङ्गीकुर्वते ।

सञ्जीविनी—तदङ्गमिति । मघवन् ! तत्तस्मात्कारणान्महाक्रतोरश्वमेधस्याग्रयं श्रेष्ठमङ्गं साधनममुं तुरङ्गं प्रतिमोक्तुं प्रतिदातुमर्हसि । तथाहि, श्रुतेः पथो दर्शयितारः सन्मार्गप्रदर्शका ईश्वरा महान्तो मलीमसां मलिनां पद्धतिं मार्गं नाददतेन स्वीकुर्वते । असन्मार्गं नावलम्बन्त इत्यर्थः । 'मलीमसं तु मलिनं कच्चरं मलदूषितम्' इत्यमरः ।

समासः—अग्रे भवम् अग्र्यम्, तत् । महांश्चासौ क्रतुश्च महाक्रतुः (कर्म०) तस्य महाक्रतोः ।

कोशः—इन्द्रो मरुत्वान् मघवा' 'प्राग्र्याचाग्रीयमग्रियप्रियम्' 'तुरगतुरङ्गाश्वतुरङ्गमाः' श्रुतिः स्त्री वेद आम्नायस्त्रयी' ईश्वरः पतिरीशिता' 'मलीमसन्तु मलिनं कच्चरं मलदूषितम् ।' 'सरणिः पद्धतिः पद्या' इति चामराः ।

भावार्थः—हे देवराज, तस्माद् अश्वमेधयागस्य प्रधानाङ्गभूतंतुरगपरावर्तय । वैदिकमार्गदर्शका समर्थाः गर्हितं मार्गं न स्वीकुर्वन्ति खलु भवादृशा इति भावः ।

हिन्दीश्लोकार्थः—हे इन्द्र ! इस कारण से महायाग अश्वमेध के प्रधानांगभूत इस घोडे को छोडने के लिए तुम योग्य हो । वेद के मार्ग दिखाने वाले महानुभाव लोग मलिन मार्ग को अपनाते नहीं ॥४६॥

इति प्रगल्भं रघुणा समीरितं वचो निशम्याधिपतिर्दिवौकसाम् ।
निवर्तयामास रथं सविस्मयः प्रचक्रमे च प्रतिवक्तुमुत्तरम् ॥४७॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके यज्ञाश्वहरणोत्तरं रघुवचनान्तरमिन्द्रस्योत्तरं वर्णितमस्ति ।

अन्वयः—इति रघुणा समीरितं प्रगल्भं वचो निशम्य दिवौकसाम् अधिपतिः सविस्मयः रथं निवर्तयामास । उत्तरं प्रतिवक्तुं प्रचक्रमे च ।

वाच्य०—दिवौकसामधिपतिना सविस्मयेन रथः निवर्तयाञ्चक्रे । (कर्मवा०) उत्तरं प्रतिवक्तुं प्रचक्रमे च ( भाव० ) ।

चन्द्रिका—इति=एवं प्रकारेण, रघुणा=युवराजजेन, समीरितं=निगदितम्, प्रगल्भं=प्रतिभायुक्तम्, वचः=भाषितम्, निशम्य=श्रुत्वा, दिवौकसाम्=अमराणाम्, अधिपतिः=नायकः, सविस्मयः=साश्चर्यः । कथमयं मानवो मामद्राक्षीत्, कथं वाऽनेन सप्रौणि युक्तियुक्तञ्च कथ्यते ? इत्याश्चर्यमिन्द्रस्य । 'सन्=भवन्' रथं=स्यन्दनम्, निवर्तयामास=परावर्तितवान् । उत्तरं=प्रतिवाक्यम्, प्रतिवक्तुं=प्रतिकथयितुम् प्रचक्रमे=प्रारेभे । चस्तु रथनिवर्तनोत्तरदानयोः स्वारित्यसूचकः ।

समासः—द्यौः ओकः येषां ते दिवौकसः, (बहु०) तेषां दिवौकसाम् । विस्मयेन सह वर्तते इति सविस्मयः (सहपूर्वपदो बहु०) ।

कोशः—'सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः' 'भाषितं वचनं वचः ।' 'प्रगल्भः प्रतिभान्विते ।' 'शताङ्गः स्यन्दनो रथः' 'विस्मयोऽद्भुतमाश्चर्यम्' 'प्रतिवाक्योत्तरे समे ।' इति चामरः ।

भावार्थः—इत्थं रघोः प्रौढं वचनमाकर्ण्य संजातविस्मयः देवराजः रथं परावर्तयद् उत्तरं च दातुम् आरभत इति भावः ।

हिन्दीश्लोकार्थः—इस प्रकार रघु से कहे हुए गम्भीरार्थक वचन सुन कर स्वर्गनिवासियों के राजा इन्द्र आश्चर्ययुक्त होते हुए रथ को घुमाया और उत्तर देने का उपक्रम भी किया ॥४७॥

यदात्थ राजन्यकुमार ! तत्तथा यशस्तु रक्ष्यं परतो यशोधनैः ।
जगत्प्रकाशं तदशेषमिज्यया भवद्गुरुर्लङ्घयितुं ममोद्यतः ॥४८॥

**प्रसङ्गः**—रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके इन्द्रेण स्वयशः रक्षार्थं शतक्रतु नामपालनार्थं विघ्नकरणमस्ति।

**अन्वयः**—हे राजन्यकुमारः! 'त्वं' यद् आत्थ तत् तथा, तु यशोधनैः परतः यशः रक्ष्यं 'भवति' भवद्गुरुः जगत्प्रकाशम् अशेषं मम तद् यशः इज्यया लङ्घयितुम् उद्यतः 'अस्ति'।

**वाच्य०**—तद् त्वयोच्यते (कर्म०) तेन तथा भूयते (भाववा०) यशोधनाः परतो यशो रक्षन्ति (कर्तृ०)। भवद्गुरुणा मम तद् इज्यया लङ्घयितुम् उद्यतेन 'भूयते' (भाव०)।

**चन्द्रिका**—हे राजन्यकुमार!=अङ्ग क्षत्रियबालकः!, त्वं=भवान्, यद्=यद्वचनम्, आत्थ=ब्रूषे, तद्=वचनं, तथा=यथार्थम्। तु=किन्तु, यशोधनैः=कीर्तिवित्तैः, परतः=अन्येभ्यः, यशः=कीर्तिः, रक्ष्यं=परिपाल्यम्। भवतीति शेषः। भवद्गुरुः=त्वत्पिता, जगत्प्रकाशं=लोकख्यातम्, अशेषं=समस्तम्, मम=शतक्रतोः, तद्=यशः, तां=कीर्तिम्, इज्यया शततमेनाश्वमेधयागेन, लङ्घयितुम्=अत्येतुम्, उद्यतः=सप्रयत्नः, अस्तीति शेषः।

**सञ्जीविनी**—यदिति। हे राजन्यकुमार! क्षत्रियकुमार! 'मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्, इत्यमरः। यद्वाक्यमात्थ ब्रवीषि। 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इत्यनेनाहादेशः। तत्तथा सत्यम्। किं तु यशोधनैरस्मादृशैः परतः शत्रुतो यशो रक्ष्यम्। ततः किमत आह—भवद्गुरुस्त्वत्पिता जगत्प्रकाशं लोकप्रसिद्धमशेषं सर्वं मम तद्यश इज्यया यागेन लङ्घयितुं तिरस्कर्तुमुद्यत उद्युक्तः।

**समासः**—राज्ञोऽपत्यं पुमान् राजन्यः, राजन्यस्य कुमारः राजन्यकुमारः, तत्सम्बुद्धौ राजन्यकुमार! रक्षितुं योग्यं रक्ष्यम्। यश एव धनं येषां ते यशोधनाः (बहु०) तैः यशोधनैः। भवतः गुरुः भवद्गुरुः (ष० त०)। जगति प्रकाशं जगत् प्रकाशम् (स० त०), तत् पुनस्तदेव।

**कोशः**—'मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्' 'यशः कीर्तिः समज्या च' 'निखिलाखिलानि निःशेषम्' 'तदा यदा सर्वदैवं' इत्यमरः। 'प्रकाशः स्फुटहासयोः। उद्योगेऽविप्रसिद्धे च' इत्यनेकार्थसंग्रहः।

भावार्थः—राजकुमार ! त्वदुक्तं यद्यपि तथ्यम्, तथापि यशःप्राणैः यतोऽपि निजयशसः हानिः भवति ततः तद् यशः परिपालनीयं खलु ? 'शतक्रतुः' इति ममैव विद्यमानां पदवीं तव पिता शतमश्वमेधयागान् अनुष्ठाय अपहर्तुं प्रवृत्त इति मया शततमयागः यथा न भवेत् तथाऽयमश्वोऽपनीयते ।

हिन्दीश्लोकार्थः—हे राजकुमार, तुम जो बात कहते हो वह ठीक है। फिर भी कीर्ति ही को धन मानने वालों से दूसरों से अपनी कीर्ति की रक्षा की जानी चाहिए। आपके पिता जगत्प्रसिद्ध उस मेरे यश को यज्ञ के अनुष्ठान से अतिक्रमण करना चाहते हैं। अर्थात् 'शतक्रतु' जो मैं ही हूँ, वे बनना चाहते हैं। अतः मैं उस सौवें याग में विघ्न कर रहा हूँ ॥४८॥

हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः ।
तथा विदुर्मां मुनयः शतक्रतुं द्वितीयगामी नहि शब्द एष नः ॥४९॥

प्रसङ्गः- अत्र यथा पुरुषोत्तममहेश्वरस्तथैव शतक्रतोः वदवाची नान्यः कोऽपि वर्णितोऽस्ति, इति कालिदासीये रघुवंशेऽस्ति ।

अन्वयः—यथा हरिः एकः पुरुषोत्तमः, त्र्यम्बकः एक एव महेश्वरः स्मृतः नापरः, तथा मां मुनयः शतक्रतुं विदुः । नः एष शब्दः द्वितीयगामी नहि ।

वाच्य०—यथा हरिणा एकेन पुरुषोत्तमेन स्मृतेन भूयते, त्र्यम्बकेनैव महेश्वरेण स्मृतेन 'भूयते', नापरेण । तथाऽहं मुनिभिः शतक्रतुः विद्ये ( कर्म० ), एतेन शब्देन द्वितीयगामिना नहि 'भूयते' (अन्यत्र सर्वत्र भाववा०) ।

चन्द्रिका—यथा=येन प्रकारेण, हरिः=विष्णुः, एकः=केवलः, पुरुषोत्तमः =पुरुषोत्तमपदवीधारी 'स्मृतः', आम्नातः=उक्तः, त्र्यम्बकः=त्रिलोचनः शिवः, एक एव=एकल एव, एवोऽन्ययोगव्यवच्छेदकः, महेश्वरः=महेश्वर-पदवीकः, स्मृतः =कथितः, तथा=एवम्, मां=शक्रम्, मुनयः=ऋषयः, शतक्रतुं=शतक्रतु-पदवीधारिणम्, विदुः=मन्यन्ते । नः=अस्माकम् हरिहरशक्राणाम्, एष शब्दः=अयं पुरुषोत्तम=महेश्वरशतक्रतु-रूपः वाचकः, द्वितीयगामी=अन्यवाचकः, नहि=नैव, भवतीति शेषः ।

सञ्जीविनी—हरिरिति । पुरुषेषूत्तम इति सप्तमीसमासः । 'न निर्धारणे' इति षष्ठीसमासनिषेधात् । कर्मधारये तु 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः'

त्येत्युत्तमपुरुष इति स्यात् । यथा हरिर्विष्णुरेक एव पुरुषोत्तमः स्मृतः । यथा च त्र्यम्बकः शिव एव महेश्वरः स्मृतः । नापरोऽपरः पुमान्न । तथा मां मुनयः । शतक्रतुं वदुर्वदन्ति । 'विदो लटो वा' इति झेरुसादेशः । नोऽस्माकम् । हरिहरयोर्मम चेत्यर्थः । एष त्रितयोऽपि शब्दो द्वितीयगामी नहि । द्वितीयाप्रकरणे गम्यादीनामुपसङ्ख्यानात्समासः ।

समासः—पुरुषेषु उत्तमः (स० त०) । त्रीणि अम्बकानि (नयनानि) यस्य सः त्र्यम्बकः (बहु०) । शतं क्रतवो यस्य सः (बहु०) शतक्रतुः । द्वितीयं गच्छतीति द्वितीयगामी ।

कोशः-'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥' 'श्रीपतिः पुरुषोत्तमः' 'त्र्यम्बकस्त्रिपुरान्तकः' 'शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः ।' 'एके मुख्यान्यकेवलाः' 'शक्रः शतमन्युः (शतक्रतुः)—दिवस्पतिः ।' 'शास्त्रे शब्दस्तु वाचकः' 'वाचयमो मुनिः ।' इत्यमराः ।

भावार्थः—अये राजकुमार ! यथा एक एव बिष्णुः 'पुरुषोत्तमः' त्रिलोचन एक एव 'महेश्वरः' तथैव अहम् एक एव 'शतक्रतुः' । इमे त्रय उपाधयः चतुर्थं नैव गच्छन्ति इति जगत्प्रसिद्धम् । तथा स्थितेऽपि त्वत्पिता 'शतक्रतुः' बुभूषति ? नाहं सहे इदमिति भावः ।

हिन्दीश्लोकार्थः— जिस प्रकार विष्णु अकेले 'पुरुषोत्तम' कहे गए हैं, और जिस प्रकार त्रिलोचन ही केवल 'महेश्वर' कहे गए हैं, और दूसरा नहीं, उसी प्रकार मुनि लोग मुझे 'शतक्रतु' ( सौ अश्वमेधकर्ता ) मानते हैं । हम लोगों के ये तीनों ( पुरुषोत्तम-महेश्वर-शतक्रतु ) शब्द दूसरे पुरुष के पास नहीं जा सकते ॥ ४९ ॥

अतोऽयमश्वः कपिलानुकारिणा पितुस्त्वदीयस्य मयाऽपहारितः ।
अलं प्रयत्नेन तवात्र मा निधाः पदं पदव्यां सगरस्य सन्ततेः ॥५०॥

प्रसङ्गः— महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीयसर्गे विद्यमानेऽस्मिन् श्लोके शतक्रतुपदरक्षार्थं मयाऽश्वः चोरितोऽस्तीति वर्णितमस्ति

अन्वयः—अतः त्वदीयस्य पितुः अयम् अश्वः कपिलानुकारिणा मया अपहारितः तव अत्र प्रयत्नेन अलम् सगरस्य सन्ततेः पदव्यां पदं मा निधाः ।

वाच्य०—अत इममश्वमहमपहारितवान् ( कर्तृवा० )। त्वया पदं मा निधायि (कर्म०)।

चन्द्रिका—अतः=तस्मात्, त्वदीयस्य=तावकीनस्य, पितुः=तातस्य दिलीपस्य, अयम्=शततमाश्वमेधयागाङ्गभूतः, अश्वः=तुरगः, कपिलानुकारिणा=कपिलसमानेन, अनेन=सादृश्येन त्वत्पूर्वपुरुषाः कपिलमनादृत्य=यामवस्थां प्रापुः सैव=तवापि स्यादिति ध्वनितम्। मया=इन्द्रेण, अपहारितः=मोषितः, अश्वस्य=चौर्यं कृतमिति यावत्। तव=रघोः अश्वरक्षकस्य, अत्र=अश्वे प्रयत्नेन=प्रयासेन, अलं=मा भूयताम्। अलमयं=वारणार्थकः, सगरस्य=सगरराजस्य, सन्ततेः=सगरपुत्राणाम्, पदव्याम्=अश्वमोचनरूपे मार्गे, पदं=चरणम्, मा निधाः=मा निधेहि। धाधातोर्निपूर्वात् सर्वलकारापवादो लुङ्। अडागमनिषेधश्च।

सञ्जीविनी—अत इति। यतोऽहमेव शतक्रतुरतस्त्वदीयस्य पितुरयं शततमोऽश्वः कपिलानुकारिणा कपिलमुक्तितुल्येन मयाऽपहारितोऽपहृतः। अपहारित इति स्वार्थे णिच। तवात्राश्वे प्रयत्नेनालम्। प्रयत्नो मा कारीत्यर्थः। निषेधं प्रति करणत्वात् तृतीया। सगरस्य राज्ञः सन्ततेः सन्तानस्य पदव्यां पदं मा निधाः न निधेहि। निपूर्वाद्धाधातोर्लुङ्। 'न माङ्योगे' इत्यडागमप्रतिषेधः। महदास्कन्दनं ते विनाशमूलं भवेदिति भावः।

समासः—तव अयं त्वदीयः, तस्य त्वदीयस्य। कपिलम् अनुकर्तुं शीलमस्येति कपिलानुकारी, तेन कपिलानुकारिणा।

कोशः—'तातस्तु जनकः पिता' 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्।' 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु।' 'पन्थानः पदवी सृतिः' 'सन्ततिर्गोत्रजननकुलानि' इत्यमरः।

भावार्थः—तस्मात् यशोरक्षणार्थमयमश्वः कपिलमुनितुल्येन मयाऽपह्रियते। ततोऽश्वरक्षणे परिश्रमः मास्तु, मा वा सगरपुत्रानुसरणं कुर्याः। यदि कुर्याः स एव परिणामः स्वविनाशरूपः सम्भवेदिति विभीषिका दर्शिता।

हिन्दीश्लोकार्थः—इसलिए तुम्हारे पिता का यह घोड़ा कपिलमुनिसदृश मुझसे हरा गया है। तुम्हारा इस घोड़े के विषय (छुड़ाने के) में प्रयास बस, सगरपुत्रों के मार्ग में पाँव मत रखो। (यदि सगरपुत्रों के समान घोड़ा छुड़ाने का प्रयास करोगे तो वही गति (विनाश) हो जायगी) ॥५०॥

ततः प्रहस्यापभयः पुरन्दरं पुनर्बभाषे तुरगस्य रक्षिता ।
गृहाण शस्त्रं यदि सर्ग एष ते न खल्वनिर्जित्य रघुं कृती भवान् ॥५१॥

प्रसङ्गः—रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके रघुणा यज्ञाश्वचोरो इन्द्रः समरायोद्घोषितोऽस्ति ।

अन्वयः—ततः तुरगस्य रक्षिता प्रहस्य अपभयः सन् पुनः पुरन्दरं बभाषे । यदि एष ते सर्गः 'तदा' शस्त्रं गृहाण, भवान् रघुम् अनिर्जित्य कृती न खलु ?

वाच्य०—तुरगस्य रक्षित्रा प्रहस्यापभयेन पुरन्दरो बभाषे (कर्म०) । यद्येतेन सर्गेण 'भूयते' (भाव०) 'तदा' शस्त्रं गृह्यताम्, (कर्म०) भवता कृतिना न भूयते (भाव०) ।

चन्द्रिका:—ततः=इन्द्रवचनश्रवणानन्तरम् । तुरगस्य=अश्वमेधाश्वस्य, रक्षिता=पालयिता, रघुरिति यावत् । प्रहस्य=उच्चैर्हसित्वा, अपभयः=गतत्रासः, 'सन् भवन्' पुरन्दरं=शतक्रतुम्, बभाषे=जगाद । 'हे इन्द्र !' यदि=चेत्, एषः=अश्वनयनरूपः, ते=तव, सर्गः=निश्चयः, तदेति शेषः, शस्त्रम्=आयुधम्, गृहाण=आदत्स्व । भवान्=श्रीमान् इन्द्रः, रघुं=दिलीपतनयं धनुर्धरत्वादिविशिष्टं = वीरमित्यर्थान्तरसंक्रमितवाच्यो ध्वनिः । अनिर्जित्य = अपराभूय कृती कृतार्थः, अश्वो माम् अजित्वा नेतुं न शक्यते इत्यर्थः, न खलु नैव किन्तु ?

सञ्जीविनी—तत इति । ततस्तुरगस्य रक्षिता रघुः प्रहस्य प्रहासं कृत्वा । अपभयो निर्भीकः, सन् । पुनः पुरन्दरं बभाषे । किमिति—हे देवेन्द्रः ! चद्येषोऽश्वमोचनरूपस्ते तत्र सर्गो निश्चयः । 'सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु' इत्यमरः । तर्हि शस्त्रं गृहाण । भवान् रघुं मामनिर्जित्य । कृतमनेनेति कृती । कृतकृत्यो न खलु । 'इष्टादिभ्यश्च' इतीनिप्रत्ययः । रघुमित्यनेनात्मनो दुर्जयत्वं सूचितम् ।

समासः—अपगतं भयं यस्मात् सः अभयः (बहु०) । कृतम् अनेनेति कृती ।

कोशः—'तुरगतुरङ्गाश्वतुरङ्गमाः' 'पुरुहूतः पुरन्दरः' 'सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु', 'आयुधन्तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ ।' 'कृती कुशल इत्यपि' । [illegible]

भावार्थः—ततो रघुः विभीषिकाम् इन्द्रस्य श्रुत्वा उच्चैः हसित्वा निर्भीकः सन् इन्द्रम् उवाच इन्द्र ! यद्येष निर्णयस्तदा, युद्धाय सम्मुखो भव, रघुम् अविजित्यैव तुरगं नेतुं न प्रभविष्यसि ।

हिन्दीश्लोकार्थः—इसके बाद घोड़े का रक्षक रघु हँस कर निर्भय होते हुए इन्द्र से बोले, 'हे देवेन्द्र !' यदि यह 'घोड़ा ले ही जाना' तुम्हारा निर्णय है तो शस्त्र ग्रहण करो, रघु को जीते बिना तुम कृतकृत्य नहीं हो सकते । अर्थात् घोड़ा ले जा नहीं सकते ।।५१।।

स एवमुक्त्वा मघवन्तमुन्मुखः करिष्यमाणः सशरं शरासनम् ।
अतिष्ठदालीढविशेषशोभिना वपुःप्रकर्षेण विडम्बितेश्वरः ।।५२।।

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके रघोः धनुः सज्जीकृत्येन्द्रावलोकनं वर्णितमस्ति ।

अन्वयः—सः उन्मुखः 'सन्' मघवन्तम् एवम् उक्त्वा शरासनं सशरं करिष्यमाणः आलीढविशेषशोभिना वपुःप्रकर्षेण विडम्बितेश्वरः 'सन्' अतिष्ठत् ।

वाच्य०—तेनोन्मुखेन सशरं शरासनं करिष्यमाणेन विडम्बितेश्वरेण सता 'अस्थीयत' (भाववा०) ।

चन्द्रिका—सः=रघुः, उन्मुखः=उपरिवदनः, 'सन्=भवन्' एवम्=उक्तरीत्या, उक्त्वा=भाषित्वा, शरासनं=चापम् सशरं=बाणयुक्तं, करिष्यमाणः=अग्रे विधास्यन्, आलीढेन=युद्धोचितपादन्यासेन, विशेषशोभिना=अधिकरुचिरेण, वपुःप्रकर्षेण=शरीरोत्कर्षेण, विडम्बितेश्वरः=अनुकृतमहादेवः, 'सन्' त्रिपुरसंहारादौ यथा महेश्वरो युद्धसज्जः शरीरणाकर्षक आसीत् तथेति उपमा, अतिष्टत् सन्तस्थे ।

सञ्जीविनीः—स इति । स रघुरुन्मुखः सन् । मघवन्तमिन्द्रमेवमुक्त्वा शरासनं चापं सशरं करिष्यमाणः । आलीढेनालीढाख्येन स्थानभेदेन विशेषशोभिनाऽतिशयशोभिना वपुः प्रकर्षेण देहोन्नत्येन विडम्बितेश्वरोऽनुसृतपिनाकी सन् । अतिष्ठत् । आलीढलक्षणमाह यादवः—'स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम् । त्रिवितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति ।। अन्वर्थं स्यात्समपदमालीढं तु ततोऽग्रतः । दक्षिणे वामनाकुञ्च्य प्रत्यालीढविपर्ययः' इति ।

समासः—उद्गतं मुखं यस्य स उन्मुखः (बहु०)। शरेण सह वर्तते इति सशरम्, तत् सशरम्, ( सहपूर्व०बहु० )। विशेषेण शोभते इति विशेषशोभी, आलीढेन विशेषशोभी-आलीढविशेषशोभी, तेन आलीढविशेषशोभिना। वपुषः प्रकर्षः, वपुःप्रकर्षः, तेन वपुःप्रकर्षेण। विडम्बित ईश्वरो येन स विडम्बितेश्वरः ( बहु० )।

कोशः—'इन्द्रो मरुत्वान् मघवा, 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्।' 'कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः।' 'स्यात् प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम्।' 'ईश्वरः शर्व ईशानः इत्यमरः'।

भावार्थः—इत्थमिन्द्रं कथयित्वा धनुः सशरं करिष्यन् वीरोचितेन पादयोः अग्रे पश्चाच्च विन्यासविशेषेण अत्यन्ताकर्षकेण शरीरोत्कर्षेण युद्धसन्नद्धो रघुः त्रिपुरसंहारोद्यतं हरमनुकुर्वन् अवतस्थे।

हिन्दीश्लोकार्थः—वह रघु ऊपर मुँह किए इन्द्र से इस प्रकार कह कर धनुष को बाणसंयुक्त करते हुए 'आलीढ' नामक पैंतरे से अधिक जँचने वाले देहके उत्कर्ष से भगवान् शंकर ( त्रिपुरसंहार के अवसरपर युद्धसज्ज ) का अनुकरण करते हुए स्थित हुए ॥५२॥

रघोरवष्टम्भमयेन पत्रिणा हृदि क्षतो गोत्रभिदप्यमर्षणः।
नवाम्बुदानीकमुहूर्तलाञ्छने धनुष्यमोघं समधत्त सायकम् ॥५३॥

प्रसङ्गः—रघुवंश-महाकाव्ये तृतीये सर्गे विद्यतेऽस्मिन् श्लोके रघुणा चालितबाणेन विद्धेन्द्रेणापि बाणसन्धानः वर्णितोऽस्ति।

अन्वयः—रघोः अवष्टम्भमयेन पत्रिणा हृदि क्षतः 'अतएव' अमर्षणः गोत्रभिद् अपि नवाम्बुदानीकमुहूर्तलाञ्छने धनुषि अमोघं सायकं समधत्त।

वाच्यः—क्षतेनात एवामर्षणेन गोत्रभिदाप्यमोघः सायकः समधीयत ( कर्म० )।

चन्द्रिका:—रघोः, अवष्टम्भमयेन—स्तम्भात्मकेन, पत्रिणा—बाणेन, हृदि—वक्षसि, क्षतः—आहतः, अत एव, अमर्षणः—क्रोधनः, गोत्रभिदपि—शक्रोऽपि,

नवाम्बुदानीकस्य=नूतनजलदानाम् ओघस्य, मुहूर्तं=स्वल्पकालम्, लाञ्छने=चिह्नभूते, धनुषि=शरासने, इन्द्रधनुरिति आकाशे=उपमेघ दृश्यमाने इति यावत्। अमोघं=सफलम्, सायकं=शरम्, समधत्त=योजितवान्।

सञ्जीविनी—रघोरिति। रघोरवष्टम्भमयेन स्तम्भरूपेण। 'अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि' इति विश्वः। पत्त्रिणा बाणेन हृदि हृदये क्षतो विद्धः। अत एवामर्षणोऽसहनः। क्रुद्ध इत्यर्थः, गोत्रभिदिन्द्रोऽपि। 'सम्भावनीये चौरेऽपि गोत्रः क्षोणीधरे मतः' इति विश्वः। नवाम्बुदानामनीकस्य वृन्दस्य मुहूर्त्तं क्षणमात्रं लाञ्छने चिह्नभूते धनुषि। दिव्ये धनुषीत्यर्थः। अमोघमवन्ध्यं सायकं बाणं समधत्त संहितवान्।

समासः—प्रचुरः अवष्टम्भः अवष्टम्भमयः, (प्राचुर्ये मयट्) तेन अवष्टम्भमयेन। गोत्रान् भिनत्तीति गोत्रभित्। न मर्षयतीत्यमर्षणः। नवाश्च ते अम्बुदाश्च नवाम्बुदाः, नवाम्बुदानाम् अनीकं नवाम्बुदानीकम्, नवाम्बुदानीकस्य मुहूर्त्तं लाञ्छनं नवाम्बुदानीकमुहूर्तलाञ्छनम्, तस्मिन् नवाम्बुदानीकमुहूर्तलाञ्छने। न मोघः अमोघः, (नञ्त०) तम् अमोघम्।

कोशः—'अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि।' इति विश्वः। 'सुत्रामा गोत्रभिद् वज्री' क्रोधनोऽमर्षणः कोपी' 'पत्री रोप इषुर्द्वयोः' 'मोघं निरर्थकं व्यर्थम्' 'कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणम्।' इत्यमराः।

भावार्थः—रघुशरेण स्तम्भरूपेण वक्षसि विद्धः तत एव क्रुद्धः ईन्द्रोऽपि तीक्ष्णं बाणं मेघकालिके चित्रवर्णे दिव्यधनुषि संयोजितवानिति भावः।

हिन्दीश्लोकार्थः—रघु के सर्वथा स्तम्भरूप बाण से वक्षस्थल में आहत हुए इन्द्र भी क्रुद्ध होकर नूतन मेघवृन्द के थोड़ी देर चिह्न बनने वाले (बरसात में 'इन्द्रधनुष' दिखाई देता है। आकाश में) अर्थात् दिव्य धनुष पर अमोघ (सफल) बाण का सन्धान किया ॥५३॥

दिलीपसूनोः स बृहद् भुजान्तरं प्रविश्य भीमासुरशोणितोचितः।
पपावनास्वादितपूर्वमाशुगः कुतूहलेनेव मनुष्यशोणितम् ॥५४॥

प्रसङ्गः—कहाकविकालिदासविरचिते रघुवंश-महाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके इन्द्रसंचालितस्य वाणस्य रघोः वक्षस्थले प्रवेशस्य वर्णनमस्ति ।

अन्वयः—भीमासुरशोणितोचितः स आशुगः दिलीपसूनोः बृहद्भुजान्तरं प्रविश्य अनास्वादितपूर्वं मनुष्यशोणितं कुतूहलेनेव पपौ ।

वाच्य०—भीमासुरशोणितोचितेन तेन आशुगेन कुतूहलेनेव मनुष्यशोणितं पपे (कर्म०) ।

चन्द्रिका—भीमासुराणां=भयङ्करदैत्यानाम्, शोणितोचितः=रक्तापानाभ्यासवान्, सः=इन्द्रमुक्तः, आशुगः=बाणः, दिलीपसूनोः=रघोः, बृहद्=विशालम्, भुजान्तरं=उरःस्थलम्, प्रविश्य=अन्तर्गत्वा, अनास्वादितपूर्वं=पूर्वम् अदृष्टस्वादम्, मनुष्यशोणितं=मनुजरक्तम्, कुतूहलेनेव=कौतुकेनेव, पपौ=अपिबत् । आचचामेत्यर्थः ।

सञ्जीविनी—दिलीपेति भीमानां भयङ्कराणामसुराणां शोणि रुधिरे उचितः परिचितः स इन्द्रमुक्त आशुगः सायको दिलीपसुनोः रघोर्बृहद्विशालं भुजान्तरं वक्षः प्रविश्य अनास्वादितपूर्वं पूर्वमनास्वादितम् । सुप्सुपेति समासः । मनुष्यशोणितं कुतूहलेनेव पपौ ।

समासः—भीमाश्च ते असुराश्च भीमासुराः (कर्म०) भीमासुराणां शोणिते उचितः भीमासुरशोणितोचितः ( स० त० )। आशु गच्छतीत्याशुगः । भुजयोः अन्तरं भुजान्तरम्, तत् भुजान्तरम् । पूर्वम् अनास्वादितम् अनास्वादितपूर्वम्, तत् अनास्वादितपूर्वम् । मनुष्याणां शोणितं मनुष्यशोणितं, तत् पुनस्तत् ।

कोशः—'विशंकटं पृथु बृहद् बिशालं विपुलं महत् ।' 'न ना क्रोडं भुजान्तरम्' घोरं भीमं भयानकम्' 'असुरा दैत्यदैतेयाः' 'रक्तक्षतजशोणितम्' 'आशुगौ वायुविशिखौ' 'कुतुकं च कुतूहलम्' 'मनुष्या मानुषा मर्त्या मनुजा मानवा नराः । इति चामरः । 'उचितं विदितेऽभ्यस्ते मिते मुक्तेऽपि बाच्यवत् ।' इत्यनेकार्थ० ।

भावार्थः—घोरराक्षसानां परिचितरक्तः सुरेन्द्रवाणः रघोः विशाले वक्षसि

प्रविश्य पूर्वं कदापि न पीतमिति कौतुकाविष्ट इव इदं प्रथमं मनुष्यरक्तं पीतवान् । भूरि रक्तं स्रावयामासेति भावः ।

हिन्दीश्लोकार्थः—घोर दैत्यों के रक्त से परिचित देवेन्द्र के बाणने दिलीप पुत्र रघु के विशाल वक्षःस्थल में प्रवेश कर, पहले कभी न चखा होने से मानों कुतूहल से मनुष्य का रक्तका पान किया ।। ५४ ।।

हरेः कुमारोऽपि कुमारविक्रमः सुरद्विपास्फालनकर्कशांगुली ।
भुजे शचीपत्रविशेषकाङ्किते स्वनानामचिह्नं निचखान सायकम् ।।५५।।

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंश-महाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके रघुणा इन्द्रस्य बाहौ बाणप्रहारः वर्णितोऽस्ति ।

अन्वयः—कुमारविक्रमः कुमारः अपि सुरद्विपास्फालनकर्कशाङ्गुली शचीपत्रविशेषकाङ्किते हरेः भुजे स्वनामचिह्नं सायकं निचखान ।

वाच्य०—कुमारविक्रमेण कुमारेणापि स्वनामचिह्नः सायको निचख्ने ( कर्म० ) ।

चन्द्रिका—कुमारस्येव=स्कन्दस्येव, विक्रमः=पराक्रमो, यस्य=तादृशः कुमारोऽपि=युवराजो रघुरपि, सुरद्विपस्य=ऐरावतस्य, आस्फालनेन=पृष्ठे प्रहारेण, कर्कशाङ्गुली=रूक्षकरशाखे, शच्याः=इन्द्राण्याः, पत्रविशेषकेण=पत्राकाररचनाविशेषेण, अङ्किते=चिह्निते, हरेः इन्द्रस्य, भुजे=बाहौ, स्वनामचिह्नं—निजनामधेयमुद्रितम्, सायकम्=इषुम्, निचखान=न्यखनत्, यथा भुजान्तः सम्यक् प्रविशेत् तथा बाणं तत्र मज्जितवानिति यावत्

सञ्जीविनी—हरेरिति । कुमारस्य स्कन्दस्य विक्रम इव विक्रमो यस्य स तथोक्तः । 'सप्तम्युपमानपूर्वपदस्य—' इत्यादिना समासः । कुमारोऽपि रघुरपि, सुरद्विपस्यैरावतस्यास्फालनेन कर्कशा अङ्गुलयो यस्य स तस्मिन् । शच्याः पत्रविशेषकैरङ्किते शचीपत्रविशेषकाङ्किते हरेरिन्द्रस्य भुजे स्वनामचिह्नं स्वनामाङ्कितं सायकं निचखान निखातवान् । निष्कण्टकराज्यमाप्तस्यायं महानविनय इति भावः ।

समास—कुमारस्य विक्रम इव विक्रमो यस्य सः कुमारविक्रमः (बहु०) । सुराणां द्विपः सुरद्विपः, सुरद्विपस्य आस्फालनं सुरद्विपास्फालनम्, सुरद्विपास्फा-

लनेने कर्कशा अंगुलयो यस्य सः सुरद्विपास्फालनकर्कशांगुलिः तस्मिन् सुरद्विपास्फालनकर्कशाङ्गुलौ । पत्राकाराणि विशेषकाणि पत्रविशेषकाणि, (मध्यमपलोपि स०) शच्याः पत्रविशेषकाणि शचीपत्रविशेषकाणि (ष० त०) शचीपत्रविशेषकैः अङ्कितः शचीपत्रविशेषकाङ्कितः (तृ० त० स०), तस्मिन् शचीपत्रविशेषकाङ्किते । स्वस्य नाम स्वनाम् स्वनाम्ना चिह्नितः (तृ० त०) तं स्वनामचिह्नतम् ।

कोशः—'कुमारः क्रौञ्चदारणः' 'विक्रमस्त्वतिशक्तिता' 'कर्कशं कठिनं क्रूरम्' 'अंगुल्यः करशाखाः स्युः' 'पुलोमजा शचीन्द्राणी' तमालपत्रतिलकचित्रकाणि विशेषकम्' 'चिह्नं लक्ष्म च लक्षणम्' 'भुजबाहू प्रवेष्टो दोः' इति चामराः ।

भावार्थः—षण्मुखवत् पराक्रमी रघुरपि इन्द्रबाणाहतोऽपि ऐरावतस्य पृष्ठताडनेन यस्याङ्गुलयः कठिनाः संवृत्ताः, यत्र च शच्या अनुरागेण पत्राकारा रेखा उत्कीर्णाः (गोदा है) तस्मिन् इन्द्रभुजे 'युवराजो रघुः' इति स्वनाममुद्रितं बाणं निखातवान् । निजभुजबलपताका इन्द्रबाहौ उड्डायिता इति भावः ।

हिन्दीश्लोकार्थः—कार्तिकेय के समान पराक्रमी रघु ने भी ऐरावत हाथी की पीठ पर थपथपाने से जिसकी अंगुलियाँ रूखी हो गई हैं तथा जिसपर इन्द्राणीने पत्राकार रचना ( गोदना ) की है, ऐसे इन्द्र के बाहु में अपना नाम खुदा है जिसमें ऐसे बाण को गाड़ दिया ।।५५।।

जहार चान्येन मयूरपत्रिणा शरेण शक्रस्य महाशनिध्वजम् ।
चकोप तस्मै स भृशं सुरश्रियः प्रसह्य केशव्यपरोपणादिव ।।५६।।

प्रसङ्गः—महाकविमालिदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके रघुणा यज्ञाश्वचोरस्येन्द्रस्य ध्वजध्वंसः वर्णितोऽस्ति ।

अन्वयः—अन्येन मयूरपत्रिणा शरेण शक्रस्य महाशनिध्वजं जहार च । सः सुरश्रियः प्रसह्य केशव्यपरोपणात् इव तस्मै भृशं चुकोप ।

वाच्य०—अन्येन शरेण महाशनिध्वजो जह्रे (कर्मवा०) तेन तस्मै भृशं चुकुपे (भाव०) ।

चन्द्रिका—अन्येन=अपरेण, मयूरपत्त्रिणा=बर्हिवहंवता, (अलङ्कारार्थं स्वदितमनार्थं वा शरे मयूरपक्षसंयोजनम्) शरेण=बाणेन, शक्रस्य=इन्द्रस्य, महा-

शनिध्वजं=वृहद्वज्रपताकां, जहार च=अच्छिनद् अहरद् वा, चः=समुच्चायकः। सः=पुरन्दरः, सुरश्रियः—देवलक्ष्म्याः, प्रसह्य=बलात्कारेण, केशानां=कचानां व्यपरोपणादिव=कर्तनादिव, मुण्डनादिति यावत्। तस्मै=रघवे, भृशम्=अतिमात्रम्, चुकोप=चुक्रोध।

सञ्जीविनी—जहारेति। अन्येन मयूरपत्त्रिणा मयूरपत्त्रवता शरेण शक्रस्येन्द्रस्य महान्तमशनिरूपं ध्वजं जहार चिच्छेद च। स शक्रः। सुरश्रियः प्रसह्य बलात्कृत्य केशानां व्यपरोपणादवतारणाच्छेदनादिव। तस्मै रघवे भृशमत्यर्थं चुकोप। तं हन्तुमियेषेत्यर्थः। 'क्रुधद्रुहेर्ष्यासूयाऽर्थानां यं प्रति कोपः' इत्यादिना सम्प्रदानत्वाच्चतुर्थी।

समासः—मयूराणां पत्त्रं मयूरपत्त्रम् मयूरपत्त्रमस्यास्तीति मयूरपत्त्री (मत्वर्थी०), तेन मयूरपत्त्रिणा। महांश्चासौ (अशनिरूपो ध्वजः अशनिध्वजः) अशनिध्वजश्च महाशनिध्वजः, तम् (कर्म०) महाशनिध्वजम्। सुराणां श्रीः सुरश्रीः, तस्याः सुरश्रियः। केशानां व्यपरोपणं केशव्यपरोपणम्, तस्मात् केशव्यपरोपणात्।

कोशः—'भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि।' 'कदम्बमार्गणशराः' 'दम्भोलिरशनिर्द्वयोः' 'पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम्।' अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्' 'सम्पत्तिः श्रीश्च लक्ष्मीश्च' 'प्रसह्य तु हठार्थकम्' 'कचः केशः शिरोरुहः' इत्यमरः।

भावार्थः—रघुः अन्येन बाणेन महद् वज्रध्वजम् अच्छिनत्। तदा इन्द्रः सुरलक्ष्म्याः बलात्कारेण केशमुण्डने कृते यावत् कुप्येत् तावत् रघूपरि क्रोधं कृतवान्।

हिन्दीश्लोकार्थः—रघु ने दूसरे मोरपंख से युक्त बाण से इन्द्र का वज्रचिह्न वाली ध्वजा को काट डाला। तब इन्द्र ने देवलक्ष्मी के केशों का बलात्कार से उतार लेने कीतरह (ध्वज काटने से) रघु पर अत्यन्त क्रोध किया ॥५६॥

तयोरुपान्तस्थितसिद्धसैनिकं गरुत्मदाशीविषभीमदर्शनैः।
बभूव युद्धं तुमुलं जयैषिणोरधोमुखैरूर्ध्वमुखैश्च पत्त्रिभिः ॥५७॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके रघुणा सहेन्द्रस्य युद्धवर्णनमस्ति।

अन्वयः—जयैषिणोः तयोः गुरुत्मदाशीविषभीमदर्शनैः अधोमुखैः ऊर्ध्वमुखैश्च पत्त्रिभिः उपान्तस्थितसिद्धसैनिकम् तुमुलं युद्धं बभूव।

वाच्य०—उपान्तस्थितसिद्धसैनिकेन तुमुलेन युद्धेन बभूवे। (भाव)

चन्द्रिका—जयैषिणोः=परस्परं विजिगीष्वोः जयेच्छायुक्तयोः, तयोः=इन्द्ररघ्वोः, गरुत्मदाशीविषाः=पक्षसहितसर्पाः, ते इव=सपक्षसर्पवद्, भीमदर्शनैः=भयङ्करावलोकनैः, अधोमुखैः=निम्नाननैः, ऊर्ध्वमुखैश्च=उपरिवदनैश्च, पत्त्रिभिः=शरैः, उपान्तस्थिताः=आसन्नसन्निहिताः, सिद्धाः=देवयोनिविशेषाः गगने सैनिका=रघुसेनासमवेताः भुवि, यस्मिन् तत्=तादृशम्, तुमुलं=निबिडं, युद्धं=जन्यं, बभूव=संवृत्तम्।

सञ्जीविनीः—तयोरिति। जयैषिणोरन्योऽन्यजयाकाङ्क्षिणोस्तयोरिन्द्ररघ्वोः। गुरुत्मन्तः पक्षवन्तः। 'गरुत्पक्षच्छदाः पत्रम्' इत्यमरः। अशीविषाः। आशिषि द्रष्ट्रायां विषं येषां त आशीविषाः सर्पाः। पृषोदरादित्वात्साधुः। "स्त्री त्वाशीर्हिताशंसाऽहिदंष्ट्रयोः' इत्यमरः। त इव भीमदर्शनाः। सपक्षाः सर्पा इव द्रष्टुणां भयावहा इत्यर्थः। तैरधोमुखैरूर्ध्वमुखैश्च। मन्त्रिनोरुपर्यधोदेशावस्थितत्वादिति भावः। पत्त्रिभिर्बाणैरुपान्तस्थितास्तटस्थाः सिद्धा देवा इन्द्रस्य, सैनिकाश्च रघोर्यस्मिंस्तत्तथोक्तं तुमुलं संकुलं युद्धं बभूव।

समासः—जयम् एषितुं शीलं ययोस्तौ जयैषिणौ, तयोः जयैषिणोः। गरुतः सन्ति एषामिति गरुत्मन्तः, गरुत्मन्तश्च ते आशीविषाश्च गरुत्मदाशीविषाः (कर्म०) गरुत्मदाशीं बिषवत् भीमं दर्शनं येषां ते गरुत्मदासीविषभीददर्शनाः, तैः। अधः मुखं येषां ते अधोमुखाः तैः अधोमुखैः (बहु०)। ऊर्ध्वं मुखं येषां ते ऊर्ध्वमुखाः, तैः ऊर्ध्वमुखैः (बहु०)। सिद्धाश्च सैनिकाश्च सिद्धसैनिकाः (द्वन्द्व०) उपान्ते स्थिताः स्थिताः उपान्तस्थिताः (स० त०) उपान्तस्थिताः सिद्धसैनिकाः यस्मिन् तत् उपान्तसिद्धसैनिकम् (बहु०)।

कोशः—'पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः।' 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते।' 'गरुत्पक्षच्छदाः पत्त्रम्' 'आशीविषो विषधरः', 'घोरं भीमं भयानकम्' 'युद्धमायोधनं जन्यम्' 'तुमुलं रणसंकुले' इति चामरः।

भावार्थः—जयार्थिनोः रघोः इन्द्रस्य च इदं प्रनं युद्धं गगने दर्शकाः सिद्धाः भुवि च सैनिकाः पश्यन्ति स्म । तत्र रघोरुपरि गच्छन्तो बाणाः इन्द्रस्य चाध आगच्छन्तः शरा सर्पा इव भयंकरा भासन्ते स्म । विलक्षणं देवमानवयुद्धमिद-मासीदिति भावः ।

हिन्दीश्लोकार्थः—परस्पर विजयेच्छा रखनेवाले उन दोनों इन्द्र तथा रघु के पक्षयुक्त सर्पों के समान देखने में भयंकर अधोमुख (इन्द्र के) और ऊर्ध्व-मुख (रघु के) बाणों से, निकट में ही स्थित हैं सिद्ध (गगन में) तथा सैनिक (भूमि में) जिसमें, ऐसा घनघोर युद्ध हुआ ॥५७॥

अतिप्रबन्धप्रहितास्त्रवृष्टिभिस्तमाश्रयं दुष्प्रसहस्य तेजसः ।
शशाक निर्वापयितुं न वासवः स्वतश्च्युतं वह्निमिवाद्भिरम्बुदः ॥५८॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके रघो इन्द्रेण सह युद्धे पराक्रमः वर्णितोऽस्ति ।

अन्वयः—वासवः अप्रतिबन्धप्रहितास्त्रवृष्टिभिः दुष्प्रसहस्य तेजसः आश्रयं तम् अम्बुदः अद्भिः स्वतः च्युतं वह्निम् इव निर्वापयितुं न शशाक ।

वाच्य०—वासवेन अम्बुदेन अद्भिः स्वतः च्युतं वह्निमिव तं निर्वापयितुं न शेके । (भाव०)

चन्द्रिका—वासवः=पुरन्दरः, अतिप्रबन्धेन=अधिकनैरन्तर्येण, प्रहिताभिः=प्रेषिताभिः, अस्त्रवृष्टिभिः=शरवर्षैः, दुष्प्रसहस्य=दुःखेनापि सोढुमशक्यस्य, तेजसः=प्रतापस्य, आश्रयम्=आधारम्, तं=रघुम्, अम्बुदः=जलदः, अद्भिः=जलैः, स्वतः=स्वयम्, च्युतं=निर्गतम्, वह्निमिव=पावकमिव, विद्युतमित्यर्थः । निर्वापयितुं=शमयितुम्, न=नैव, शशाक=प्रबभूव ।

सञ्जीविनी—अतिप्रबन्धेति । वासवोऽतिप्रबन्धेनातिसातत्येन प्रहिताभिः प्रयुक्ताभिरस्त्रवृष्टिभिर्दुष्प्रसहस्य दुःखेन प्रसह्यत इति दुष्प्रसहं तस्य । दुःखे-नाप्यसह्यस्येत्यर्थः । तेजसः प्रतापस्याश्रयं तं रघुम् । अम्बुदोऽद्भिः स्वतश्च्युतं निर्गतं वह्निमिव । निर्वापयितुं न शशाक । रघोरपि लोकपालात्मकस्येन्द्रांश-सम्भवत्वादिति भावः ।

समासः—अस्त्राणां वृष्टयः अस्त्रवृष्टयः, अतिप्रबन्धेन प्रहिताः अतिप्रबन्ध-

प्रहिता: (तृ० त०), अतिप्रबन्धप्रहिताश्च ता अस्त्रवृष्टयश्च अतिप्रबन्धप्रहितास्त्रवृष्टय: (कर्म०) ताभि: अतिप्रबन्धप्रहितास्त्रवृष्टिभि: । दु:खेन प्रसह्यते इति दुष्प्रसहम्, तस्य दुष्प्रसहस्य ।

कोश:—'वासवो वृत्रहा वृषा'. 'वृष्टिवर्षं' 'आप: स्त्री भूम्नि वार्वारि' 'अग्निर्वैश्वानरो वह्निः' इत्यमर: । 'तेजस्त्विड्रेतसोर्बले । नवनीते प्रभावेऽग्नौ' इत्यनेकार्थसंग्रह: ।

भावार्थ:—यथा जलद: स्वयं निर्गतं वैद्युतमग्निं वृष्टिभि: शमयितुं न पारयति तथैव इन्द्रोऽपि स्वस्माद् निर्गतं दिक्पालांशसम्भूतत्वात् रघो: सततबाणवर्षणेनापि लोकोत्तरतेजश्शालिनं त जेतुं समर्थो नाभूदित्यर्थ: ।

हिन्दीश्लोकार्थ:—इन्द्र निरन्तर प्रयोग किये गए बाणों की वर्षा से दुःसह प्रताप के आश्रयभूत रघु को उसी प्रकार शान्त (हरा) नहीं सका जैसा कि बादल जल बरसाने से अपने से ही उत्पन्न बिजली को बुझाने में समर्थ नहीं होता। (अपने से ही उत्पन्न—लोकपालांशसम्भव होने से—रघु भी है) ॥५८॥

ततः प्रकोष्ठे हरिचन्दनाङ्किते प्रमथ्यमानार्णवधीरनादिनीम् ।
रघुः शशाङ्कार्द्धमुखेन पत्त्रिणा शरासनज्यामलुनाद्विडौजसः ॥५९॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके रघुणा इन्द्रस्य प्रत्यञ्चाकर्त्तनं वर्णितमस्ति ।

अन्वयः—ततः रघुः हरिचन्दनाङ्किते प्रकोष्ठे प्रमथ्यमानार्णवधीरनादिनीं विडौजसः शरासनज्यां शशाङ्कार्धमुखेन पत्त्रिणा अलुनात् ।

वाच्य०— रघुणा प्रमथ्यमानार्णवधीरनादिनी शरासनज्या अलूयत (कर्म.) ।

चन्द्रिका— ततः=अनन्तरम्, रघु=युवराजः, हरिचन्दनेन=कपिलवर्णचन्दनेन, अङ्किते=लिप्ते प्रकोष्ठे=मणिबन्धे (कूपराधोभागे 'केहुनीसे निचला हिस्सा'=प्रमथ्यमानार्णव इव=विलोडयमानोदधिरिव, धीरं=गम्भीरं नदतीति ध्वनतीति=प्रमथ्यमानार्णवधीरनादिनी, तां, विडोजसः=इन्द्रस्य, शरासनस्य=धनुषः, ज्यां=मौर्वीम्, शशाङ्कार्धमुखेन=चन्द्रार्धवदनेन चन्द्रहासाभिधेनेति केचित्, पत्त्रिणा=इषुणा, अलुनात्=विच्छेद ।

सञ्जीविनी— तत इति । ततो रघुर्हरिचन्दनाङ्किते प्रकोष्ठे मणिबन्धे

प्रमथ्यमानार्णवधीरनादिनीं प्रमथ्यमानार्णव इव धीरं गम्भीरं नदतीति तां तथोक्ताम् । वेवेष्टि व्याप्नोतीति विड् व्यापकमोजो यस्य स तस्य विडोजस इन्द्रस्य । पृषोदरादित्वात्साधुः । शरासनज्यां धनुर्मौर्वीम् । शशाङ्कस्यार्द्धः खण्ड इव मुखं फलं यस्य तेन पत्रिणाऽलुनादच्छिनत् ।

समासः—हरिचन्दनेन अङ्कितः (तृ० त०) हरिचन्दनाङ्कितः, तस्मिन् हरिचन्दनाङ्किते । प्रमथ्यमानश्चासौ अर्णवश्च प्रमथ्यमानार्णवः (कर्म०), प्रमथ्यमानार्णववत् धीरं नदतीति प्रमथ्यमानार्णवधीरनादिनी, ताम् प्रम.....नादिनीम् । शश इव अङ्को यस्य सः शशाङ्कः, शशाङ्कस्य अर्धः शशाङ्कार्धः, शशाङ्कार्धं इव मुखं यस्य सः शशाङ्कार्धमुखः, तेन शशाङ्कार्धमुखेन (बहुव्रीहिगर्भबहु०) । शरासनस्य ज्या शरासनज्या, तां शरासनज्याम् ।

कोशः—'तैलपर्णिकगोशीर्षहरिचन्दनमस्त्रियाम् ।' 'स्यात्कफोणिस्तु कूर्परः ।' 'अस्योपरि प्रगण्डः स्यात् प्रकोष्ठस्तस्य चाप्यधः ।' 'भित्तं शकलखण्डे वा पुंस्यर्धः' 'पत्री रोप इषुर्द्वयोः' 'मौर्वी ज्या शिञ्जिनी गुण,' इति चामरः ।

भावार्थः—ततो रघुरिन्द्रस्य हस्तैकदेशे गम्भीरध्वानकारिणीं धनुषः शिञ्जिनीं चन्द्रार्धाकारशरेण चिच्छेद । एवं रघोरेव पराक्रमः परां काष्ठां गतः ।

हिन्दीश्लोकार्थः—इसके बाद रघुने कपिलवर्ण के विशिष्ट चन्दन से प्रलिप्त प्रकोष्ठ (केहुनी से कलाई तक के निचले अंश) में मथे जानेवाले समुद्र की भाँति गम्भीर ध्वनि करनेवाली धनुष की प्रत्यञ्चा को अर्धचन्द्राकार वाले बाण से काट डाला ॥५९॥

स चापमुत्सृज्य विवृद्धमत्सरः प्रणाशनाय प्रबलस्य विद्विषः ।
महीध्रपक्षव्यपरोपणोचितं स्फुरत्प्रभामण्डलमस्त्रमाददे ॥६०॥

प्रसङ्ग—महाकविकालिदासविरचितेन रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके स्वप्रत्यञ्चा भङ्गे जाते रघो वज्रप्रहारः वर्णितोऽस्ति ।

अन्वयः—विवृद्धमत्सरः सः चापम् उत्सृज्य प्रबलस्य विद्विषः प्रणाशनाय महीध्रपक्षव्यपरोपणोचितं स्फुरत्प्रभामण्डलम् अस्त्रम् आददे ।

वाच्य०—विविद्धमत्सरेण तेन स्फुरत्प्रभामण्डलम् अस्त्रम् आददे (कर्म० । ।


व्युत्पत्ति—विवृद्धमत्सरः-वर्धितक्रोधः, सः-इन्द्रः, चाप—धनुः, उत्सृज्य—

निमुच्य, प्रबलस्य=बलिष्ठस्य, विद्विषः=रिपोः, प्रणाशनाय=विध्वंसनाय, महीध्रपक्षाणां=पर्वतगरुताम्, व्यपरोपणे=सञ्छेदने, उचितम्=अभ्यस्तम्, स्फुरत्प्रभामण्डलं=द्योतमानकान्तिपुञ्जयुतम्, अस्त्रम्=अर्थाद् वज्रम्, आददे=गृहीतवान् ।

सञ्जीविनी—स इति । विवृद्धमत्सरः प्रवृद्धवैरः स इन्द्रश्चापमुत्सृज्य प्रबलस्य विद्विषः शत्रोः प्रणाशनाय वधाय । महीं धारयन्तीति महीध्राः पर्वताः । मूलविभुजादित्वात्कप्रत्ययः । तेषां पक्षव्यपरोपणे उचितं स्फुरत्प्रभामण्डलमस्त्रं वज्रायुधमाददे जग्राह ।

समासः—विवृद्धो मत्सरो यस्य सः विवृद्धमत्सरः । प्रकृष्टं बलं यस्य स प्रबलः, (बहु०) तस्य प्रबलस्य । विशेषेण द्वेष्टीति विद्विट्, तस्य विद्विषः । महीध्राणां पक्षाः महीध्रपक्षाः, महीध्रपक्षाणां व्यपरोपणे उचितं ( स० त० ) महीध्रपक्षव्यपरोपणोचितं, तत् पुनस्तद्वत् । प्रभाणां मण्डलं, प्रभामण्डलम्, स्फुरत् प्रभामण्डलं यस्य तत् स्फुरत्प्रभामण्डलम् (बहु०), तत् पुनस्तद्वदेव ।

कोशः—'मत्सरा मक्षिकायां स्यात् मात्सर्यक्रोधयोः पुमान् ।' इति मेदिनी । "धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' 'महीध्रे शिखरिक्ष्माभृद्' 'गरुत्पक्षच्छदाः' 'स्युः प्रभा रुग्रुचिः' ,चक्रवालं तु मण्डलम्' इति चामरः ।

भावार्थः—वासवः छिन्नज्यं चापं विहाय प्रबलशत्रोः पराजय एव न कार्यः, अपि तु वध एव कर्तव्य इति देदीप्यमानकान्तिपुञ्जं पर्वतपक्षच्छेदननिपुणं वज्रायुधं गृहीतवान् ।

हिन्दीश्लोकार्थः—इस प्रकार आक्रमण से प्रवृद्ध क्रोध इन्द्र ने कटी प्रत्यञ्चावाले धनुष को छोड़कर प्रबल शत्रु का विनाश करने के लिए, पर्वतपक्षों के काटने में प्रसिद्ध तथा प्रभापुञ्ज से चमकने वाले वज्रायुध को लिया ॥६०॥

रघुर्भृशं वक्षसि तेन ताडितः पपात भूमौ सह सैनिकाश्रुभिः ।
निमेषमात्रादवधूय तद्व्यथां सहोत्थितः सैनिकहर्षनिःस्वनैः ॥६१॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके इन्द्रस्य वज्राघातेन रघोः मूर्छा पुनरुत्थानं च वर्णितमस्ति ।

अन्वयः—रघुः तेन भृशं वक्षसि ताडितः 'सन्' सैनिकाश्रुभिः सह भूमौ पपात । निमेषमात्रात् तद्व्यथाम् अवधूय सैनिकहर्षनिःस्वनैः सह उत्थितः च ।

वाच्य०—भृशं वक्षसि ताडितेन रघुणा पेते, रघुणा उत्थितेन 'अभावि' (भावबा०)।

चन्द्रिका—रघुः=दिलीपपुत्रः, तेन=वज्रायुधेन, भृशम्=अतिमात्रं, वक्षसि =उरःस्थले, ताडितः=प्रहृतः, सन्, सैनिकानां=योधानाम्, अश्रुभिः=बाष्पैः, सह=साकमेव, भूमौ=पृथिव्याम्, पपात=न्यपतत्। निमेषमात्रात् मुहूर्तकालाद् एव, तद्व्यथां=तत्पीडाम्, अवधूय=तिरस्कृत्य, सैनिकानां=सैन्यभटानाम्, हर्षनिःस्वनैः=आनन्दवीरगर्जनैः, सह=समम्, उत्थितश्च=उद्गतश्च। अत एव 'अक्रमातिशयोक्तिः स्यात् सहत्वे हेतुकार्ययोः। आलिङ्गन्ति समं देवं ज्यां शराश्च पराश्च ते॥' इति लक्षणलक्षितः अक्रमातिशयोक्तिरलङ्कारः।

सञ्जीविनी—रघुरिति। रघुस्तेन वज्रेण भृशमत्यर्थं वक्षसि ताडितो हतः सन्। सैनिकानामश्रुभिः सह भूमौ पपात। तस्मिन्पतिते ते रुरुदुरित्यर्थः। निमेषमात्रात्तद्व्यथां दुःखमवधूय तिरस्कृत्य सैनिकानां हर्षेण ये निःस्वना क्ष्वेडास्तैः' सहोत्थितश्च। तस्मिन्नुत्थिते हर्षात् सिंहनादांश्चक्रुरित्यर्थः।

समासः—सेनायां समवेताः सैनिकाः, सैनिकानाम् अश्रूणि सैनिकाश्रूणि, तैः सैनिकाश्रुभिः। केवलं निमेषः निमेषमात्रम्, तस्माद् निमेषमात्रात्। तस्य व्यथा तद्व्यथा, तां तद्व्यथाम्। हर्षेण निःस्वनाः हर्षनिःस्वनाः (तृ० त०), तैः हर्षनिःस्वनैः।

कोशः—'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्।' 'उरो वत्सं च वक्षश्च' 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते।' 'चास्नु नेत्राम्बु रोदनं चास्रमश्रु च।' 'पीडा बाधा व्यथा दुःखम्।' इति चामराः।

भावार्थः—यदा रघुः वज्रेण वक्षःस्थले क्षतः भृशं भुवि न्यपतत्, तदा तत्सैनिकाः विषण्णा अरुदन्। क्षणमात्रात् तत् कष्टं निरस्य यदा तु रघुरुत्थितः तदा सैनिका हर्षेण जगर्जुरिति भावः।

हिन्दीश्लोकार्थः—रघु वज्र से छाती में अत्यन्त आहत होकर सैनिकों के आँसुओं के साथ भूमि पर गिर पड़े तथा क्षणमात्र से ही उस पीड़ा को हटाकर सैनिकों के हर्षध्वनि के साथ ही उठ खड़े हो गए। (यद्यपि शोकाश्रु और हर्ष के गर्जन गिरने तथा उठने के बाद ही होते हैं, तथापि दोनों क्रियाओं में अविलम्बता सूचित करने के लिए ऐसा कहा गया है)॥६१॥

तथाऽपि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तस्थुषः ।
तुतोष वीर्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्निधीयते ॥६२॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके पराक्रमेणेन्द्रस्य प्रसादः प्रदर्शितोऽस्ति ।

अन्वयः—तथाऽपि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरं तस्थुषः अस्य वीर्यातिशयेन वृत्रहा तुतोष । हि गुणैः सर्वत्र पदं निधीयते ।

वाच्य०—वृत्रघ्ना तुतुषे, ( भाव० ) । गुणाः सर्वत्र पदं निदधति हि (कर्तृ०) ।

चन्द्रिका—तथापि=वज्रेणाहतेऽपि, शस्त्राणाम्=आयुधानाम्, व्यवहारेण =प्रयोगेण, निष्ठुरे=क्रूरे, विपक्षभावे=शत्रुत्वे, चिरं=दीर्घकालम्, तस्थुषः= स्थितवतः, अस्य=रघोः, वीर्यातिशयेन=विक्रमबाहुल्येन, वृत्रहा=वासवः, तुतोष =मुमुदे । हि=यस्मात्, गुणैः=शौर्यादिभिः, सर्वत्र=शत्रुष्वपि, पदं=चरणं, निधीयते=स्थाप्यते । शत्रवोऽपि परस्य गुणान् श्लाघन्ते एवेति यावत् ।

सञ्जीविनी—तथाऽपीति । तथाऽपि वज्रपातेऽपि शस्त्राणामायुधानां व्यवहारेण व्यापारेण निष्ठुरे क्रूरे विपक्षभावे शात्रवे चिरं तस्थुषः स्थितवतोऽस्य रघोर्वीर्यातिशयेन । वृत्रं हतवानिति वृत्रहा । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' । तुतोष । स्वयं वीर एव वीरं जानातीति भावः । कथं शत्रोः सन्तोषोऽत आह—गुणैः सर्वत्र शत्रुमित्रोदासीनेषु पदमङ्घ्रिर्निधीयते । गुणैः सर्वत्र संक्रम्यत इत्यर्थः, गुणाः शत्रूनप्यावर्जयन्तीति भावः ।

समासः—शस्त्राणां व्यवहारः शस्त्रव्यवहारः, शस्त्रव्यवहारेण निष्ठुरः शस्त्रव्यवहारनिष्ठुरः (तृ० त०) । तस्मिन् शस्त्रव्यवहारनिष्ठुरे । विरुद्धः पक्षो यस्य सः विपक्षः, विपक्षस्य भावः विपक्षभावः, तस्मिन् विपक्षभावे । तस्थौ इति तस्थिवान्, तस्य तस्थुषः ( लिटः क्वसुप्रत्ययः ) । वीर्यस्यातिशयः वीर्यातिशयः, तेन वीर्यातिशयेन । वृत्रं हतवान् इति वृत्रहा ।

कोशः—'व्यवहारः स्थितौ पणे' इति हैमः । 'द्विड्विपक्षाहितामित्राः' 'वासवो वृत्रहा वृषा' 'पदं व्यवसितस्थानत्राणलक्ष्मांघ्रिवस्तुषु ।' इति चामरः ।

भावार्थः—वज्राहतोऽपि पुनर्योद्धुं सन्नद्धः रघुः इन्द्रं तोषयामास । वज्रम्

अतिक्रमरस्त्रम्, अनेन शत्रुनाशः शत्रुपराभवो वा नूनं भावी इति विचारयतः स्वस्य समक्षं पुनर्योद्धुमुपस्थितं रघुं विलोक्य 'वीर एव वीर्यं जानाति' इति न्यायात् वृत्रहा तम् अभिनन्दितवान् । गुणः शत्रुमित्रे अविशेषेणाकर्षतीति भावः।

हिन्दीःश्लोकार्थः—फिर भी (वज्राघात होने पर भी) अस्त्र प्रयोग से क्रूर शत्रुता में चिरकाल से टिके हुए इस रघु के अतिशयित पराक्रम से इन्द्र प्रसन्न हो गए। विद्या वीरतादि गुण सर्वत्र अर्थात् शत्रुओं में भी अपना पैर जमा ही लेता हैं। शत्रु भी अहित मनुष्य के गुण का अभिनन्दन कर ही देता है ॥६२॥

असङ्गमद्रिष्वपि सारवत्तया न मे त्वदन्येन विसोढमायुधम् ।
अवेहि मां प्रीतमृते तुरङ्गमात्किमिच्छसीति स्फुटमाह वासवः ॥६३॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके प्रसन्नेन्द्रेण वरयाचनायादिष्टः रघुः वर्णितास्ति।

अन्वयः—सारवत्तया अद्रिष्वपि असङ्गं मे आयुधं त्वदनयेन न विसोढम्, 'तस्मात्' मां प्रीतम् अवेहि। तुरङ्गमाद् ऋते किम् इच्छसि ? इति स्फुटं वासवं आह।

वाच्य— मे आयुधं त्वदन्यो न विसोढवान् (कर्तृ०)। इति स्फुटं वासवेन ऊचे (कर्म०)।

चन्द्रिका—सारवत्तया,=बलवत्तया, दृष्टत्वात्, अद्रिषु=पर्वतेषु, अपिर्विरोधे =अद्रीणां कठिनतया=दुर्गमत्वेऽपि। असङ्गम्=अप्रतिहतम्, मे=ममेन्द्रस्य, आयुधं=वज्रयुधम्, त्वदन्येन=त्वत्तोऽपरेण. न विसोढं=नैव क्षान्तम्। तस्मात् त्वया अन्यासोढस्य, सोढत्वात्, मां=शक्रम् प्रीतं=प्रसन्नम, अवेहि=जानीहि। तुरङ्गमाद्=अश्वाद, ऋते=बिना, किम्=इच्छसि, इति इत्थं, स्फुटं=स्पष्टम्, यथा स्यात्तथेति=क्रियाविशेषणम्, (इत्यन्तं कर्म०) वासवः=वृत्रहा, आह=उवाच।

सञ्जीविनी— असङ्गमिति। सारवत्तयाऽद्रिष्वप्यसङ्गमप्रतिबन्धं मे आयुधं वज्रं त्वदन्येन न विसोढम्। अतो मां प्रीतं सन्तुष्टमवेहि। तुरङ्गमादृते तुरङ्गं वर्जयित्वा। 'अन्यारादितरर्ते' इति पञ्चमी। किमिच्छसीति स्फुटं वासव आह तुरङ्गमादन्यददेयं नास्तीति भावः।

समासः— सारः अस्यास्तीति सारवत् (आयुधस्य कठिनत्वात् मतुप्) सार-

वतः भावः सारवत्ता, तया सारवत्तया। त्वत् अन्यः त्वदन्यः (पं०त०) तेन त्वदन्येन। यथाश्रुतमिदं व्यस्तमपि विवक्षितार्थदायि) न विद्यते सङ्गो यस्य तत् असङ्गम्।

कोशः—'सारो बले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिषु' 'आद्रिगोत्रगिरि-ग्रावाचलशैलशिलोच्चयाः' आयुधन्तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ।' 'पुष्टे तु प्रुषितं सोढे क्षान्तम्' 'पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने।

भावार्थः—हे राजकुमार! पर्वतेष्वपि प्रबलतया अप्रतिहतं मे वज्रायुधं त्वत्तः पूर्वं कोऽपि सोढवान्, त्वमेवाद्य इदमपि क्षान्तवान्। अहं त्वयि प्रसन्नोऽस्मि। तुरगातिरिक्तं किमपि अभिलषसि चेद् ब्रूहि-इतीन्द्रः स्पष्टभाषया उक्तवानिति भावः।

हिन्दीश्लोकार्थः—'हे रघो! दृढ होने के कारण पर्वतों में भी न निरुद्ध होनेवाले मेरा आयुध वज्र तुम्हारे बिना किसी दूसरे से नहीं सहा गया। अतः हम तुम पर प्रसन्न हैं समझो, घोड़े के अतिरिक्त क्या चाहते हो? ऐसा इन्द्र ने स्पष्ट रूप से कहा ॥६३॥

ततो निषङ्गादसमग्रमुद्धृतं सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम्।
नरेन्द्रसूनुः प्रतिसंहरन्निषुं प्रियंवदः प्रत्यवदत्सुरेश्वरम् ॥६४॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके शक्रस्य प्रसादमयीं वाणीं श्रुत्वा धनुः चालनात् विरम्य रघोः तं प्रति कथनं वर्णितमस्ति।

अन्वयः—ततः निषङ्गात् असमग्रम् उद्धृतं सुवर्णपुंखद्युतिरञ्जिताङ्गुलिम् इषुं प्रतिसंहरन् प्रियंवदः नरेन्द्रसूनुः सुरेश्वरं प्रत्यवदत्।

वाच्य०—इषुं प्रतिसंहरता प्रियंवदेन नरेन्द्रसूनुना सुरेश्वरः प्रत्यौच्यत (कर्म०)।

चन्द्रिका—ततः=इन्द्रवाक्यश्रवणानन्तरम्, निषङ्गात्=इषुधेः, असमग्रं=तथा अपूर्णं यथा तथा (क्रियावि०) उद्धृतम्=उपर्यानीतम्, सुवर्णपुङ्खस्य=कनकमुष्ठैः, द्युतिभिः=प्रभाभिः, रञ्जिताः=सुवर्णवर्णतां प्रापिताः, अङ्गुल्यः=करशाखाः, येन सः तं तादृशम्, इषुं=बाणं, प्रतिसंहरन्=प्रत्यावर्तयन्, तूणीर

एवं निदधान, इति यावत् । प्रियंवदः=मधुरभाषी, नरेन्द्रसूनुः=रघुः, सुरेश्वरं=देवराजम् प्रत्यवदत्=प्रत्यब्रवीत ।

सञ्जीविनी—तत इति । ततो निषङ्गात् तूणीरादसमग्रं यथा तथोद्धृतं सुवर्णपुङ्खद्युतिभिः रञ्जिता अङ्गुलयो येन तमिषु प्रतिसंहरन्निवर्त्तयन् । 'नाप्रहरन्तं प्रहरेद्' ति निषेध दिति भावः । प्रियं वदतीति प्रियंवदः । 'प्रियवशे वदः खच्' इति खच्प्रत्ययः, 'अरुद्विषदजन्तस्य' इत्यादिना मुमागमः । नरेन्द्रसूनुः रघुः सुरेश्वरं प्रत्यवदत् ; न तु प्राहरदिति भावः ।

समासः—न समग्रम् असमग्रम् । सुवर्णस्य पुङ्खः सुवर्णपुङ्खः, सुवर्णपुङ्खस्य द्युतयः सुवर्णपुङ्खद्युतयः, सुवर्णपुङ्खद्युतिभिः रञ्जिता अंगुलयो येन स- (बहु०) सुवर्णपुङ्खद्युतिरञ्जितांगुलिः, त सुव....ङ्गुलिम् । नराणाम् इन्द्रः नरेन्द्रः, नरेन्द्रस्य सूनुः नरेन्द्रसूनुः । प्रियं वदतोति प्रियंवदः । सुराणाम् ईश्वरः सुरेश्वरः, तं सुरेश्वरम् ।

कोशः—'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' 'सुवर्णं हेम हाटकम् ।' 'भाश्छविद्युतिदीप्तयः' 'अंगुल्यः करशाखाः स्युः' 'नत्री रोप इषर्द्वयोः' इत्यमरः ।

भावार्थः—रघुरेवं वदन्तं युद्धादुपरतं देवेन्द्रं विलोक्य, प्रहारार्थम् अर्धोत्थापितं बाणं पुनः इषुधौ निदधत् मधुरवचनं प्रत्यभाषतेति भावः ।

हिन्दीश्लोकार्थः—इन्द्र के वचन सुनने के बाद तरकश से आधा निकाले हुए, जिसकी कनकमय मूँठ की प्रभा से अंगुलियाँ पीली हो गई हैं, ऐसे बाण को पुनः तरकश में ही रखते हुए प्रिय बोलनेवाले राजकुमार रघु देवराज से बोले ॥६४॥

अमोच्यमश्वं यदि मन्यसे प्रभो ततः समाप्ते विधिनैव कर्मणि ।
अजस्रदीक्षाप्रयतः स मद्गुरुः क्रतोरशेषेण फलेन युज्यताम् ॥६५॥

प्रसङ्ग—महाकविकालीदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके रघुणा यज्ञाश्वमोचनं विनापि शतक्रोः पूर्तये इन्द्र प्रार्थना वर्णितास्ति ।

अन्वय.—हे प्रभो, अश्वम् अमोच्यं मन्यसे यदि ततः अजस्रदीक्षाप्रयतः स मद्गुरुः विधिना एव कर्मणि समाप्ते 'सति' क्रतोः अशेषेण फलेन युज्यताम् ।

वाच्य०—प्रभो त्वयाश्वोऽमोच्यो यदि मन्यते ततोऽजस्रदीक्षाप्रयतेन तेन मद्गुरुणा क्रतोः अशेषं फलं युज्यताम् ( कर्म० ) ।

चन्द्रिका—हे प्रभो !=स्वामिन् !, अश्वं=तुरगम्, अमोच्यम्=अविसर्ज्यम्, मन्यसे=अवगच्छसि, यदि=चेत्, ततः=तर्हि, अजस्रदीक्षायां=निरन्तरनियमे, प्रयतः=तत्परः पवित्रः, सः=प्रसिद्धः, मद्गुरुः=मत्पिता, विधिना एव=शास्त्रीयविधानेनैव, कर्मणि=अश्वमेधकृत्ये, समाप्ते सति=अवसिते सति, क्रतोः=यागस्य, अशेषेण=समस्तेन, फलेन=प्रयोजनेन, इन्द्रासनादिना, युज्यतां=सन्धीयताम् । युक्तः क्रियताम् ।

सञ्जीविनी—अमोच्यमिति । । हे प्रभो इन्द्र ! अश्वममोच्यं मन्यसे यदि तत्तस्तह्यजस्रदीक्षायां प्रयतः स मद्गुरुर्मम पिता विधिनैव कर्मणि समाप्ते क्रतोर्यत्फलं तेन फलेनाशेषेण कृत्स्नेन युज्यतां युक्तोऽस्तु । अश्वमेधफललाभे किमश्वेनेति भावः ।

समासः—मोक्तुं योग्यः मोच्यः, न मोच्यः अमोच्यः, तम् अमोच्यम् । अजस्रं दीक्षा अजस्रदीक्षा, अजस्रदीक्षायां प्रयतः अजस्रदीक्षाप्रयतः (स० त०) । मम गुरुः मद्गुरुः (ष० त०) । न शेषम् अशेषम्, तेन अशेषेण (नञ्त०) ।

कोशः—'प्रभुः परिवृढोऽधिपः' 'तुरङ्गाश्वतुरङ्गमाः' 'पक्षान्तरे चेद् यदि च' 'नित्यानवरताजस्रम्' 'पवित्रः प्रयतः पूतः' 'स्यान्निषेकादिकृद् गुरुः' 'विधिविधाने दैवेऽपि' 'कृत्स्नमशेषं' 'सस्ये हेतुकृते फलम्' इति चामराः ।

भावार्थः—हे सुरेश्वर ! यदि भवानश्वं मोचनानर्हं मन्यते तर्हि मे पिता यथाविधि अश्वमेधयागे कृते यत्फलं सर्गं तत्समस्तं स प्राप्नोतु । भवानश्वः विषये साग्रहः चेत् मम अश्वो मास्तु, तन्मूलकः अश्वमेधोऽपि मा भूत्, अश्वमेधस्यसाङ्गस्यानुष्ठाने यत्फलमस्ति केवलं तत्फलमस्तु, मम पितुः इति भावः ।

हिन्दीश्लोकार्थः—हे प्रभो, 'अश्व छोड़ने योग्य नहीं' ऐसा यदि आप समझते हैं तो नित्य यज्ञ की दीक्षा में पवित्र मेरे पिता महाराज दिलीप, यथा विधि कर्म समाप्त करने पर जो फल हो उन समस्त फलों से सम्पन्न हो जायँ ॥ ६६ ॥

यथा च वृत्तान्तमिमं सदोगतस्त्रिलोचनैकांशतया दुरासदः ।
तवैव सन्देशहराद्विशांपतिः शृणोति लोकेश तथा विधीयताम् ॥६६॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे विद्यमानेऽस्मिन् श्लोके राज्ञाश्वविषये इन्द्रस्यदूतेन दिलीपः जानात्विति रघोरनुरोधः वर्णितोस्ति ।

अन्वयः—सदोगतः त्रिलोचनैकांशतया दुरासदः विशांपतिः यथा इमं वृत्तान्तं तव सन्देशहराद् एव शृणोति च हे लोकेश ! तथा विधीयताम् ।

वाच्य०—सदोगतेन दुरासदेन विशांपतिना यथाऽयं वृत्तान्तः श्रूयते च (कर्म.) । हे लोकेश ! तथा विधेहि (कर्तृ०) ।

चन्द्रिका—'हे प्रभो !'=सदोगतः यज्ञसभास्थितः, त्रिलोचनस्य=अष्टमूर्तेः, शिवस्य, एकांशतया यजमानत्वेन शिवस्य अष्टान्यतममूर्तित्वात्, दुरासदः दुष्प्रसह्यः, अस्मादृशैरिति भावः, विशापतिः,=मनुजेश्वरः दिलीपः, यथा=तेनप्रकारे, इमं वृत्तान्तम्=अमुम् उदन्तम्, तव=ते, सन्देशहरात्=दूतात्, एव, (एवोऽन्ययोग व्यावृत्तौ, दूतादन्यस्मात् न शृणोति) शृणोति च=आकर्णयत्यपि, हे लोकेश=हे देवेन्द्र ! मध्ये=सम्बोधनं विनयद्योतकम् । तथा=एवम्, विधीयतां=क्रियताम् ।

सञ्जीविनी—यथेति । सदोगतः सदोगृहं गतस्त्रिलोचनस्येश्वरस्यैकांशतयाऽष्टानामन्यतममूर्तित्वात् । दुरासदोऽस्मादृशैर्दुष्प्राप्यो विशांपतिर्यथेमं वृत्तान्तं तव सन्देशहराद्वार्त्ताहरादेव शृणोति च । हे लोकेन्द्र ! तथा विधीयताम् ।

समासः—सदः गतः सदोगतः (द्वि०त०) । त्रीणि लोचनानि यस्य सः त्रिलोचनः (बहु०) एकश्चासौ अंशश्च एकांशः (कर्म० , त्रिलोचनस्य एकांशः त्रिलोचनैकांशः ( ष०त० ), त्रिलोचनैकांशस्य भावः त्रिलोचनैकांशता, तया । दुःखेन आसादयितुं योग्यः दुरासदः । सन्देशं हरतीति सन्देशहरः, तस्मात् सन्देशहरात् । लोकस्य ईशस्तत्सम्बुद्धौ लोकेश !

कोशः—'आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ।' (सदस् सान्तम्) 'विरूपाक्षस्त्रिलोचनः' 'द्वौ विशौ वैश्यमनुजौ' 'धवः प्रियः पतिः' 'वा यथा तथैवैवं साम्ये' 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः' 'स्यात्सन्देशहरो दूतः' 'स्युरेवं तु, पुनर्वैवेत्यवधारणवाचकाः ।' इति चामरः ।

भावार्थः—हे लोकेश ! यज्ञमण्डपगतो मत्पिता दिलीपः यजमानत्वात् साक्षात् शिवस्वरूपतया साधारणदूतैर्न प्राप्यः, अतः आवयोः संवृत्ताम् एतां वार्तामपि भवद्दूत एव मत्पितरं श्रावयतु। येन स अश्वमेधयागदीक्षां मुञ्चेत्, लब्धाश्वमेधफलः कृतकृत्यतां स्वस्य जानीयादिति भावः।

हिन्दीश्लोकार्थः—और यज्ञमण्डप में स्थित मेरे पिता (यजमान होने से अष्टमूर्तिशिव का एकमूर्ति हो गया) शिव के एकांश होने से साधारण व्यक्ति के लिए पहुँच से दूर है, अतः आपके दूत द्वारा ही इस समाचार को सुने, हे लोकपाल ! वैसा आप करें ॥६६॥

तथेति कामं प्रतिशुश्रुवान् रघोर्यथाऽऽगतं मातलिसारथिर्ययौ।
नृपस्य नातिप्रमनाः सदोगृहं सुदक्षिणासूनुरपि न्यवर्तत ॥६७॥

प्रसङ्गः—महाकविकालिदासविरचित रघुवंशमहाकाव्ये तृतीये सर्गे स्थितेऽस्मिन् श्लोके यज्ञाश्ववृत्तं सूचयितुं स्वीकृत्येन्द्रस्य स्वर्गप्रस्थानं रघोः गृहप्रस्थानं वर्णितमस्ति।

अन्वयः—मातलिसारथिः रघोः कामं तथा इति प्रतिशुश्रुवान् यथागतं ययौ सुदक्षिणासूनुः अपि नातिप्रमनाः नृपस्य सदोगृहं न्यवर्तत।

वाच्य०—मातलिसारथिना रघोः कामस्तथेति प्रतिशुश्रुवे (कर्म०), यथागतं यये, (भाव०) सुदक्षिणासूनुनापि नातिप्रमनसा नृपस्य सदोगृहं न्यवर्त्यत (कर्म०)।

चन्द्रिका—मातलिसारथिः=मातलिनामकः सारथिर्यस्य तादृशः इन्द्रः, रघोः=दिलीपसुतस्य, कामम्=इप्सितम्, तथेति=एवमस्त्विति, प्रतिशुश्रुवान्=प्रतिज्ञातवान्, यथागतं=यथायातम्, ययौ=जगाम। सुदक्षिणासूनू=रघुरपि, नातिप्रमनाः=अनतितुष्टचित्तः सन्, नृपस्य=दिलीपस्य सदोगृहं यागसदनम्, न्यवर्तत=परावर्तत।

सञ्जीविनी—तथेतीति। मातलिसारथिरिन्द्रो रघोः सम्बन्धिनं कामं मनोरथं तथेति तथाऽस्त्विति प्रतिशुश्रुवान्। 'भाषायां सदवसश्रुवः' इति क्वसुप्रत्ययः। यथाऽऽगतं ययौ। सुदक्षिणासूनु रघुरपि नातिप्रमना विजय-

लाभेऽप्यश्वनाशान्नातीव तुष्टः सन्। नञर्थस्य सुप्सुपेति समासः। नृपस्य सदोगृहं न्यवर्तत।

समासः—मातलिः सारथिः यस्य स मातलिसारथिः (बहु०)। आगतम् अनतिक्रम्य यथागतम्, (अव्य०)। सुदक्षिणायाः सूनुः सुदक्षिणासूनुः (ष०त०)। प्रहृष्टं मनः यस्य सः प्रमना, अत्यन्तं प्रमना: अतिप्रमनाः, न अतिप्रमनाः नातिप्रमनाः। सदसः गृहं सदोगृहम्, तद् सदोगृम्।

कोश:—'हय उच्चैःश्रवाः सूतो मातलिः' 'सूतः क्षत्ता च सारथिः' 'कामोऽभिलाषस्तर्षश्च' 'नृपभूपमहीक्षितः' स्त्रीनपुंसकयोः सदः' 'हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः' इत्यमरः।

भावार्थ:—इन्द्रो रघोः मनोरथं 'तथाऽस्तु' इति पूरयित्वा स्वर्गं परावृत्तः। रघुरपि 'साश्वः प्रस्थितः, निरश्वः परावर्ते' इति मनसि ईषत् ससंकोचः दिलीपान्तिकं यज्ञसभाम् आययौ।

हिन्दीश्लोकार्थ:—मातलि है सारथि जिनका ऐसे इन्द्र रघुकी मांग को 'वैसा ही हो' इस प्रकार प्रतिज्ञा करके स्वर्ग चले गये। रघु भी भीतरसे अतिहृष्ट न होते हुए ( घोड़ा न मिलने से ) राजा दिलीप के यज्ञमण्डप की ओर लौटे। ॥६७॥

तमभ्यनन्दत्प्रथमं प्रबोधितः प्रजेश्वरः शासनहारिणा हरेः।
परामृशन्हर्षजडेन पाणिना तदीयमङ्गं कुलिशव्रणाङ्कितम् ॥६८॥

प्रसङ्ग:—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे स्थितेऽस्मिन् श्लोके यज्ञाश्वसमाचारं विज्ञापितः दिलीपः रघोः सव्रणाङ्गस्पर्शवर्णनमस्ति।

अन्वय:—हरेः शासनहारिणा प्रथमं प्रबोधितः प्रजेश्वरः हर्षजडेन पाणिना कुलिशव्रणाङ्कितं तदीयम् अङ्गं परामृशन् तम् अभ्यनन्दत्।

वाच्य०—प्रबोधितेन प्रजेश्वरेण परामृशता सोऽभ्यनन्द्यत। ( कर्म० )

चन्द्रिका—हरेः=इन्द्रस्य, शासनहारिणा=सन्देशहरेण, दूतेनेत्यर्थः, प्रथमं=पूर्वं, प्रबोधितः=ज्ञापितः, इन्द्ररघुवृत्तमिति शेषः, बुद्ध्यर्थकत्वाद् द्विकर्मकत्वम्। प्रजेश्वरः=दिलीपः, हर्षजडेन=आनन्दस्तब्धेन, पाणिना=करेण, 'चञ्चा

शाखः शयः पाणिः' इत्यमरः । कुलिशव्रणाङ्कितं=वज्रक्षतचिह्नितम्, तदीयं=रघुसम्बन्धि, अङ्गं=गात्रम्, परामृशन्=संस्पृशन्, तं=रघुम्, अभ्यनन्दत्=वर्द्धापितवान्, 'साधु कृतम्, वज्रात् जातो व्रणोऽयं ते वीरलक्ष्म वर्तते' इतिप्रकटितवानिति भावः ।

संजीविनी—तमिति । हरेरिन्द्रस्य शासनहारिणा पुरुषेण प्रथमं प्रबोधितो ज्ञापितः वृत्तान्तमिति शेषः । प्रजेश्वरो दिलीपो हर्षजडेन हर्षशिशिरेण पाणिना कुलिशव्रणाङ्कितम् । तस्य रघोरिदं तदीयम् अङ्गं शरीरं परामृशंस्तं रघुमभ्यनन्दत् ।

समासः—प्रजानाम् ईश्वरः प्रजेश्वरः । शासनं हरतीति शासनहारी, तेन शासनहारिणा । हर्षेण जडः हर्षजडः (तृ० त०), तेन हर्षजडेन । कुलिशस्य व्रणः कुलिशव्रणः, कुलिशव्रणेन अंकितं कुलिशव्रणाङ्कितम्, तत् पुनस्तदेव । तस्येदं तदीयं, तत् तदीयम् ।

कोशः—'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु ॥' 'अववादस्तु निर्देशो निदेशः शासनं च सः । शिष्टिश्चाज्ञा' 'मुत् प्रीतिः प्रमदो हर्षः' 'सुषीमः शिशिरो जडः' 'पञ्चशाखः शयः पाणि' 'अङ्गं प्रतीकोऽवयवोऽपघनः' 'कुलिशं भिदुरं पविः, 'व्रणोऽस्त्रियामीर्ममरुः' इति चामरः ।

भावार्थः—इन्द्रदूतेन इन्द्र रघुवृत्तान्तं पूर्वमेव बोधितः स दिलीपः प्रणामं कुर्वतः पुत्रस्य वज्रक्षतं कलेवरं सानन्दं स्पृशन् रघुम् साधुवादेनाभिनन्दितवान् ।

हिन्दीश्लोकार्थः—इन्द्र के सन्देश लाने वाले दूत से पहले ही समाचार जानने वाले दिलीपने हर्षातिशयसे स्तब्ध हाथ से वज्र के घाव से चिह्नित रघु के अंग को स्पर्श करते हुए उसका अभिनन्दन किया ॥६८॥

इति क्षितीशो नवतिं नवाधिकां महाक्रतूनां महनीयशासनः ।
समारुरुक्षुर्दिवमायुषः क्षये ततान सोपानपरम्परामिव ॥६९॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे स्थितेऽस्मिन् श्लोके दिलीपस्यैकोनशतयागसम्पादनं वर्णितमस्ति ।

अन्वयः—महनीयशासनः क्षितीशः इति महाक्रतूनां नवाधिकां नवतिम् आयुषः क्षये दिवं समारुरुक्षुः सोपानपरम्पराम् इव ततान ।

वाच्य०—महनीयशासनेन क्षितीशेनेति महाक्रतूनां नवाधिका नवतिः आयुषः क्षये सति दिवं समारुरुक्षणा सोपानपरम्परेव तेने ( कर्म० )।

चन्द्रिका—महनीयशासनः=पूजनीयाज्ञः, क्षितीश्वरः=भूपतिः दिलीपः, इति=इत्थम्, महाक्रतूनां=महायज्ञानाम्, अश्वमेधानामित्यर्थः नवाधिकां=नवतिं नवनवतिम्, आयुषः=जीवितसमयस्य, क्षये=अवसाने, सतीति शेषः, दिवं=स्वर्गम्, समारुरुक्षुः=साधु आरोढुमिच्छुः. सोपानपरम्परामिव=आरोहणराजिमिव, ततान्=विस्तारितवान्।

सञ्जीविनी—इतीति। महनीयशासनः पूजनीयाज्ञः क्षितीश इत्यनेन प्रकारेण 'इति हेतुप्रकरणप्रकाशादिसमाप्तिषु' इयमरः। महाक्रतूनामश्वमेधानां नवभिरधिकां नवतिमेकोनशतमायुषः क्षये सति दिवं स्वर्गं समारुरुक्षुरारोढुमिच्छुः सोपानानां परम्परां पङ्क्तिमिव ततान।

समासः—महनीयं शासनं यस्य सः (बहु०) महनीयशासनः। क्षितेः ईशः क्षितीशः। नवभिः अधिका नवाधिका (तृ० त०), तां नवाधिकाम्। समारोढुम् इच्छुः समारुरुक्षुः। सोपानानां परम्परा सोपानपरम्परा, तां सोपानपरम्पराम्।

कोशः—'निदेशः शासनं च सः।' 'बृहद्विशालं पृथुलं, महत्' 'लवः क्रतुः' 'आयुर्जीवितकालो ना' 'आरोहणं स्यात् सोपानं निःश्रेणिस्त्वधिरोहिणी' 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु।' इति चामराः।

भावार्थः—अनेन क्रमेण दिलीपो नवनवतिम् अश्वमेधयागान् अनुष्ठाय, देहावसाने स्वर्गारोहणार्थं नवनवतिं सोपानानि इव निर्मितवान्। ऊर्ध्वगमनाय सोपानेषु पदं निधाय गन्तुं सौकर्यं स्यादिति यागान् सोपानानीव रचितवानिति भावः।

हिन्दीश्लोकार्थः—जिसकी आज्ञा सम्मानित है ऐसे राजा दिलीप ने इस प्रकार से निन्यानबे अश्वमेध महायागों को, जीवित समय समाप्त होने पर स्वर्ग चढ़ने के लिये मानो (९९) सीढ़ियाँ बना दीं ॥६९॥

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपवारणम्।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥७०॥

प्रसङ्गः—महाकविकालिदासविरचिते रघुवंशमहाकाव्ये तृतीये सर्गे स्थितेऽस्मिन् श्लोके रघौ राज्यं निक्षिप्य सपत्नीकस्य दिलीपस्य तपोवनगमनं वर्णितमस्ति ।

अन्वयः—अथ विषयव्यावृत्तात्मा सः यथाविधि यूने सूनवे नृपतिककुदं सितातपवारणं दत्त्वा तया देव्या सह मुनिवनतरुच्छायां शिश्रिये । हि गलितवयसाम् इक्ष्वाकूणाम् इदं कुलव्रतं 'भवति' ।

वाच्य०—अथ विषयव्यावृत्तात्मना तेन मुनिवनतरुच्छाया शिश्रिये (कर्म.) । अनेन इक्ष्वाकूणां कुलव्रतेन 'भूयते' (भाव०) ।

चन्द्रिका—अथ=अनन्तरम्, विषयेभ्यः=इन्द्रियार्थेभ्यः = शब्दस्पर्शरूपरसगन्धेभ्यः, व्यावृत्तः=निवृत्तः, आत्मा=मनः यस्य स विषयव्यावृत्तात्मा, सः=दिलीपः, यथाविधि=विधानानुसारेण, यूने=तरुणाय, सुनवे=सुताय, नृपतिककुदं =पार्थिवलक्षणम्, सितातपवारणं=श्वेतच्छत्रम्, दत्त्वा=प्रदाय, तया प्रसिद्धया, देव्या=महिष्या सुदक्षिणया, सह=समम्, मुनिवनस्य=ऋष्याश्रमस्य, तरुच्छायां =वृक्षानातपम्, शिश्रिये=भेजे, आश्रितवानित्यर्थः । हि=यस्मात्, इक्ष्वाकूणाम्=इक्ष्वाकुवंशोत्पन्नानाम्, राज्ञामित्यर्थः, इदं=मुनितरुच्छायाश्रयणम्, कुलव्रतं=वंशपरम्परागतो नियमः, भवतीति शेषः । 'वार्द्धके मुनिवृत्तीनाम्' इति प्रारम्भ उक्तत्वात् रघूणां राज्ञां स्थविरे वानप्रस्थाश्रमग्रहणं सहजमेवेत्यर्थः । सर्गान्ते छन्दः परिवर्तनम् ।

सञ्जीविनी—अथेति । अथ विषयेभ्यो व्यावृत्तात्मा विवृत्तचित्तः स दिलीपो यथाविधि यथाशास्त्रं यूने सूनवे नृपतिककुदं राजचिह्नम् । 'ककुद्वत्ककुदं श्रेष्ठे वृषाङ्के राजलक्ष्मणि' विश्वः । सितातपवारणं श्वेतच्छत्रं दत्त्वा तया देव्या सुदक्षिणया सह मुनिवनतरोश्छायां शिश्रिये श्रितवान् वानप्रस्थाश्रमं स्वीकृतवानित्यर्थः । तथाहि । गलितवयसां वृद्धानामिक्ष्वाकूणामिक्ष्वाकोर्गोत्रापत्यानाम् । तद्राजसंज्ञकत्वादणो लुक् । इदं वनगमनं कुलव्रतम् । देव्या सहेत्यनेन सस्त्रीकवानप्रस्थाश्रमपक्ष उक्तः । तथा च याज्ञवल्क्यः—'सुतविन्यस्तपत्नीकस्तया वाऽनुगतो वनम् । वानप्रस्थो ब्रह्मचारी साग्निः सोमासनो व्रजेत् ॥' इति । हरिणीवृत्तमेतत् । तदुक्तम्—'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति ।

समासः—विषयेभ्यः व्यावृत्तः (पं० त०) विषयव्यावृत्तः, विषयव्यावृत्त आत्मा यस्य सः विषयव्यावृत्तात्मा ( बहु० )। विधिमनतिक्रम्य यथाविधि (अव्ययी०)। नृपतेः ककुदं नृपतिककुदम्, तत्। आतपं वारयतीति आतपवारणम्, सितञ्च तत् आतपवारणञ्च सितातपवारणम् (कर्म०), तत् सितातपवारणम्। मुनीनां वनं मुनिवनम्, मुनिवनस्य तरवः मुनिवनतरवः, मुनिवनतरूणां छाया मुनिवनतरुच्छाया (ष० त०), तां मुनिवनतरुच्छायाम्। गलितं वयः येषां ते (बहु०, गलितवयसः, तेषां गलितवयसाम्। इक्ष्वाकोर्गोत्रापत्यानि इक्ष्वाकवः, तेषाम् इक्ष्वाकूणाम्।

कोशः—'विषया इन्द्रियार्थाश्च' 'आत्मा यत्नो धृतिर्बुद्धिर्मानसं ब्रह्म वर्ष्म च।' 'वयस्थस्तरुणो युवा' 'आत्मजस्तनयः सूनुः' 'प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्।' 'अवदातः सितो गौरः' 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः।' 'देवी कृताभिषेकायाम्' 'खगबाल्यादिनोर्वयः' 'नियमो व्रतमस्त्री तत्' इति यथायथममरः।

भावार्थः—विरक्तो वृद्धो राजा दिलीपः सुताय रघवे राजचिह्नं श्वेतच्छत्रं दत्त्वा सुदक्षिणया सह (वानप्रस्थाश्रमं गृहीत्वा) वनं जगाम, इक्ष्वाकवो वार्द्धके इदमेव परम्परया समाचरन्तीति भावः।

हिन्दीश्लोकार्थः—इसके बाद विषयों (इन्द्रियार्थ-शब्दादिकों) से चित्त हट गया है जिनका, ऐसे दिलीप महाराज शास्त्रानुसार युवक पुत्र रघु को राजचिह्न श्वेच्छत्र देकर उस सुदक्षिणा के साथ मुनियों के आश्रम के वृक्षों की छाया का आश्रयण किया। क्योंकि इक्ष्वाकुवंश के राजाओं का यह ( वार्धक्य में वन जाना ) कुल परम्परागत नियम है।।७०।।

जितपूर्वेन्द्रियाचार्यो रघुवंशे तृतीयके।
संयोज्य विवृतिं काञ्चित् कृष्णपादार्पितां व्यधात्॥

इति तृतीयः सर्गः।

